च तं काष्ठपात्रमोचनोपायम् । सः विचारयति, कथयति च **"दात्रं** आनयत, अस्याः महिष्याः ग्रीवां **कर्तयत** च ।"

सर्वे इदं कुर्वन्ति, पश्यन्ति च यद् यद्यपि महिषी मृता, तथापि काष्ठ-पात्रं शृङ्गयोः मुक्तं नास्ति । तदा कथयन्ति, **"इदानीं** किं कुर्मः ?" मूर्खाणां नेता कथयति, "इदानीं काष्ठपात्रस्य छेदनं कुरुत ।"

सर्वे इदं कुर्वन्ति, लाल बुझक्कड़ं प्रशंसन्ति च । मूर्खाणां मध्ये **एतादृशाः** महामूर्खाः सम्माननीयाः भवन्ति ।

**सहायतार्थ टिप्पणी**—बहवः = बहुत से । उपगच्छन्ति = पास जाते थे । असत्परामर्शम् = गलत सलाह । महिषी = भैंस । काष्ठपात्रे = कठौते में । तृणम् = घास । शृङ्गयोः = दोनों सींगों में । संलग्नं भवति = फँस गया । दात्रम् = गँड़ासा, कुल्हाड़ी । ग्रीवां = गर्दन को । कर्तयत = काट दो । इदानीं = अब । एतादृशाः = इस प्रकार के ।

## अभ्यास २१

### ( धर्मबुद्धिः पापबुद्धिश्च )

कस्मिंश्चिद् **अधिष्ठाने** धर्म्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म । अथ कदाचित् पापबुद्धिना चिन्तितम्—

"अहं तावत् मूर्खो **दारिद्र्योपेतश्च** । तदेनं धर्म्मबुद्धिं **आदाय** देशान्तरं गत्वा **अस्याश्रयेण** अर्थोपार्जनं कृत्वा, एनमपि **पञ्चयित्वा,** सुखी भवामि" इति ।

अथान्यस्मिन् दिने पापबुद्धिः धर्म्मबुद्धिं उक्तवान्—

"भोः मित्र ! देशान्तरं अदृष्ट्वा **वार्द्धके** शिशुजनाय कां वार्तां कथयिष्यसि ? विद्या वित्तं **शिल्पं** तावत् **सम्यक् नाप्नोति** मानवः यावत् स भूमौ देशात् देशान्तरं उत्साह-पूर्वकं न **व्रजति"** इति ।

अथ च तस्य तद्वचनं **आकर्ण्य** प्रहृष्टमना, तेनैव सह गुरुजनैः **अनुज्ञातः** शुभे दिने देशान्तरं **प्रस्थितः** । तत्र च धर्म्मबुद्धि प्रभावेण भ्रमता पापबुद्धिना **प्रभूततरं** वित्तं **आसादितम्** ।

ततश्च **तावपि** तौ प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन **निवृत्तौ** ।

**सहायतार्थं टिप्पणी**—अधिष्ठाने = नगर में। दारिद्र्योपेतश्च = दारिद्र्य + उपेतः + च = दरिद्रता से युक्त। आदाय = साथ लेकर। अस्याश्रयेण = इसके सहारे। वञ्चयित्वा = ठग कर। वार्द्धके = बुढ़ापे में। शिल्पं = कारीगरी। सम्यक् = भली प्रकार से। नाप्नोति = न + आप्नोति = नहीं प्राप्त होती। व्रजति = जाता है।

आकर्ण्य = सुनकर। अनुज्ञातः = आज्ञा पाकर। प्रस्थितः = चल पड़ा। प्रभूततरं = बहुत अधिक। आसादितम् = पाया, प्राप्त किया। द्वावपि = द्वौ + अपि = दोनों ही। निवृत्तौ = लौट पड़े।

## अभ्यास २२

### (कृतघ्नतायाः फलम्)

अस्ति गौतमस्य महर्षेः तपोवने महातपा नाम मुनिः। तत्र तेन मुनिना **काकेन नीयमानः** तस्य मुखात् पतितो मूषक**शावको** दृष्टः। ततः स्वभावदयात्मना तेन मुनिना स नीवारकणैः सम्बर्द्धितः। ततो **बिडालः** तं खादितुं उपधावति। तं दृष्ट्वा मूषकः तस्य **मुनेः क्रोडे** प्रविवेश। ततो मुनिना उक्तम्।

"मूषक त्वं **मार्जारो** भव।" ततः स बिडालः कुक्कुरं दृष्ट्वा **पलायते**। ततो मुनिना उक्तम्—"कुक्कुराद् **बिभेषि,** त्वमेव कुक्कुरो भव।" स च कुक्कुरो व्याघ्रात् बिभेति। ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः।

अथ तं व्याघ्रं मुनिः मूषकोऽयं इत्येव **पश्यति**। अथ तं मुनिं व्याघ्रं च दृष्ट्वा सर्वे वदन्ति—"अनेन मुनिना मूषको व्याघ्रतां नीतः।"

एतत् **श्रुत्वा** दुःखितः व्याघ्रोऽचिन्तयद् यद् यावदयं मुनिः तिष्ठति तावदिदं मे **स्वरूपाख्यानं** अकीर्तिकरं **न पलायिष्यते**।" इति **विचार्य** स व्याघ्रः तं मुनिं **हन्तुं** गतः।

ततो मुनिनापि तत् **ज्ञात्वा** "पुनर्मूषको **भव**" इत्युक्त्वा पुनः स मूषक एव कृतः। अत एवोच्यते—"नीचः **श्लाघ्यपदं प्राप्य** स्वामिनं हन्तु**मिच्छति**।"

**सहायतार्थं टिप्पणी**—काकेन = कौवे के द्वारा। नीयमानः = ले जाये जाते हुये। शावकः = बच्चा। बिडालः = बिल्ली। क्रोडे = गोद में। मार्जारो =

बिल्ली। पलायते = भागता है। बिभेषि = डरते हो। पश्यति = देखता है। श्रुत्वा = सुन कर। स्वरूपाख्यानम् = अपने स्वरूप की कथा। न पलायिष्यते = नहीं दूर होगी। विचार्य = सोच कर। हन्तुम् = मारने के लिये। ज्ञात्वा = जानकर। भव = हो जा। श्लाघ्यपदम् = प्रशंसा का स्थान। प्राप्य = पाकर।

## अभ्यास २३

१. नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः।
पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम्॥
२. **त्यजेदेकं** कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं च **जनपदस्यार्थे** आत्मार्थे पृथिवीं त्यजेत्॥
३. **शैले शैले** न माणिक्यं मौक्तिकं न गजे गजे।
साधवो न हि सर्वत्र चन्दनं न वने वने॥
४. विद्वत्वं च नृपत्वं च नैव तुल्यं **कदाचन**।
स्वदेशे **पूज्यते** राजा विद्वान् सर्वत्र पूज्यते॥
५. **त्वमेव** माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या **द्रविणं** त्वमेव
त्वमेव **सर्वं** मम देवदेव॥
६. सत्यं **ब्रूयात्** प्रियं ब्रूयात् न ब्रूयात् **सत्यमप्रियम्**।
प्रियं च **नानृतं** ब्रूयात् एष धर्मः सनातनः॥
७. येषां न विद्या न तपो न दानं
ज्ञानं न शीलं गुणो न भक्तिः।
**ते मर्त्यलोके भुवि भारभूता**
मनुष्यरूपेण **मृगाश्चरन्ति**॥

**सहायतार्थ टिप्पणी**—

२. त्यजेदेकम् = त्यजेत् + एकम् = एक व्यक्ति को छोड़ देना चाहिये।
जनपदस्यार्थे = जनपदस्य + अर्थे = देश के लिये।

३. शैले शैले = प्रत्येक पहाड़ पर ।
४. कदाचन = कभी भी । पूज्यते = पूजा जाता है ।
५. त्वमेव = त्वम् + तुम ही । द्रविणम् = धन । सर्वम् = सब कुछ ।
६. ब्रूयात् = बोले, बोलना चाहिये । सत्यमप्रियम् = सत्यम्+अप्रियम्= कड़ुवा लगने वाला सत्य । नानृतं = न + अनृतम् = नहीं झूठ ।
७. मर्त्यलोके = मृत्युलोक में । भुवि भारभूताः = पृथ्वी पर बोझ स्वरूप। चरन्ति = चलतें-फिरते हैं ।

## अभ्यास २४

१. **आहार** निद्रा भय मैथुनञ्च
**सामान्यमेतत्** पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको **विशेषो**
धर्मेण हीनाः पशुभिः समानाः ॥

२. **वरमेको** गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्र**स्तमो हन्ति** न च तारागणोऽपि च ॥

३. उद्यमेन हि **सिध्यन्ति** कार्याणि न मनोरथैः ।
नहि **सुप्तस्य** सिंहस्य मुखे प्रविशन्ति मृगाः ॥

४. काकचेष्टा बकध्यानं **श्वाननिद्रा** तथैव च ।
**अल्पाहारी गृहत्यागी** विद्यार्थिनः पञ्चलक्षणम् ॥

५. **पयः** पानं भुजंगानां केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां **प्रकोपाय** न शान्तये ॥

६. **श्रोत्रं श्रुतेनैव** न कुण्डलेन
दानेन **पाणिर्न** तु **कंकणेन** ।
**विभाति कायः** करुणापराणां
परोपकारेण न तु चन्दनेन ॥

७. यस्यास्ति **वित्तं** स नरः कुलीनः
स **पण्डितः** सः **श्रुतिमान् गुणज्ञः** ।
स एव वक्ता स च दर्शनीयः
**सर्वे गुणाः काञ्चनमाश्रयन्ते** ॥

**सहायतार्थ टिप्पणी—**

१. आहार = भोजन । सामान्यमेतत् = सामान्यम् + एतत् = यह दोनों में ही समान है । विशेषो = विशेषः, विशेषता ।

२. वरमेको = परम् + एकः = अच्छा है, एक । तमो = तमः, अँधेरे को । हन्ति = नष्ट करता है ।

३. सिध्यन्ति = पूरे होते हैं । सुप्तस्य = सोये हुये के ।

४. श्वान निद्रा = कुत्ते के समान नींद वाला । अल्पाहारी=कम भोजन करने वाला । गृहत्यागी = विद्या के लिए घर छोड़ने वाला, घरेलू बातों से अधिक सम्बन्ध और दिलचस्पी न रखने वाला ।

५. पयः = दूध । प्रकोपाय = कुपित या क्रोधित करने के लिये ही ।

६. श्रोत्रम् = कान । श्रुतेनैव = श्रुतेन + एव = सुनने से ही अर्थात् वेदों के सुनने से ही । पाणिर्न = पाणिः + न = हाथ, नहीं । कंकणेन = कड़े से । विभाति = शोभा देता है । कायः = शरीर ।

७. वित्तम् = धन । पण्डितः = बुद्धिमान् । श्रुतिमान् = पढ़ा लिखा, शिक्षित । गुणज्ञः = गुणों का पारखी ।

## अभ्यास २५

१. कन्या **वरयते** रूपं माता **वित्तं** पिता **श्रुतम्** ।
बान्धवाः कुलमिच्छन्ति मिष्ठान्नमितरे जनाः ॥

२. किं **वाससैवं न** विचारणीयं
वासः प्रधानं खलु योग्यतायाः ।
पीताम्बरं **वीक्ष्य** ददौ तनूजा
**दिगम्बरं** वीक्ष्य विषं समुद्रः ॥

३. भोजनं कुरु दुर्बुद्धे मा शरीरे दयां कुरु ।
**परान्नं** दुर्लभं लोके शरीराणि तु पुनः पुनः ॥

४. स्वयं महेशः श्वसुरो नगेशः
सखा **धनेशस्तनयो** गणेशः ।
तथापि **भिक्षाटनमेव** शम्भो-
**र्बलीयसी** केवलमीश्वरेच्छा ॥

५. स्वयं न खादन्ति फलानि वृक्षाः
पिबन्ति नाम्भः स्वयमेव नद्यः ।
धाराधरो वर्षति नात्महेतोः
परोपकाराय सतां विभूतयः ॥

**सहायतार्थ टिप्पणी—**

१. वरयते = पसन्द करती है (= चाहती है कि वर में होवे)। वित्तम् = धन। श्रुतम् = विद्या।
२. वाससैवम् = वाससा + एवम् = कपड़े से, ऐसा। वीक्ष्य = देख कर। दिगम्बरम् = शिव को।
३. परान्नम् = पराया अन्न, पराई रोटियाँ।
४. धनेशः = कुवेर। तनयो = तनयः = पुत्र। भिक्षाटनमेव = भिक्षाटनम् = भीख माँगने के लिये इधर-उधर घूमना। बलीयसी= बलवती।
५. नाम्भः = न + अम्भः = नहीं, पानी को। धाराधरो = धाराधरः = बादल। नात्महेतोः = न + आत्म + हेतोः = अपने लिये नहीं। सतां = सज्जनों की। विभूतयः = सम्पत्तियाँ, धन-दौलत।

# [ ख ] संस्कृत से हिन्दी में अनुवाद करो

## अभ्यास १

### ( कुछ धातुयें )

( क ) इच्छति । पृच्छति । इच्छामः । **सृजन्ति । स्पृशथ । दिशामः ।** मुञ्चतः । कुप्यति । तुष्यावः । **शुष्यन्ति** । सिध्यति । **मन्ये** । युध्यावहे । वर्णयामि । पूजयथ । मन्यावहे । विद्यध्वे ।

(ख) नरो हस्तौ **क्षालयति** । बुधाः न चोरयन्ति । एते मृगाः धावन्ति । पुत्राः **तुष्यन्ति** । रामः पूजयति । नराणां धनं विनश्यति । वृक्षात् फले पततः । मूर्खाः मित्राय कुप्यन्ति । नेत्रे कमले इव नृत्यतः । आकाशे नक्षत्राणि शोभन्ते । नराः नृपस्य आज्ञां पालयन्ति । गंगा प्रयागे **वहति** । शठाः युध्यन्ते । वर्णयामि रामस्य कथाम् । भार्य्यायां लज्जा वर्तते । किमीश्वरो विद्यते न वा ? बुधो भार्यां पूजयति ।

**सहायतार्थं टिप्पणी**—सृज् = बनाना । स्पृश् = छूना । दिश् = आज्ञा देना । शुष्य् = सूखना । मन् = मानना ।

क्षल् = धोना । तुष्य = सन्तुष्ट या प्रसन्न करना । वह् = बहना । वृत् = होना ।

## अभ्यास २

### ( कर्ता और क्रिया का साम्य )

**स्तेनौ** धनं चोरयतः । व्याघ्रः नरान् पीडयति । मूर्खाः धनं **लुभ्यन्ति** । मनुष्यौ अश्वौ **रोहतः** । अश्वः **तृणानि** भक्षयति । नराः जलं सिञ्चन्ति । नृपः ईश्वरं नमति । **उभौ** व्याघ्रौ मांसं भक्षयतः । रामः कुत्र वसति ? अस्मिन् **प्रांगणे** बालौ क्रीडयतः । तौ रामस्य कथां वर्णयतः । वृक्षात् **पर्णानि** नीचैः पतन्ति । मूर्खाणां धनं सर्वदैव नश्यति । ईश्वरस्य कृपया सर्वे जनाः सुखं लभन्ते ।

**सहायतार्थ टिप्पणी**—स्तेनौ = दो चोर। लुभ् = लोभ या लालच करना। सह् = चढ़ना या सवार होना। तृण = घास। उभौ = दोनों। प्रांगणे = आँगन में। पर्णानि = पत्ते। लभ् = पाना।

## अभ्यास ३

### ( सर्वनाम )

अस्मिन् विश्वे सूर्यः चन्द्रश्च प्रकाशेते। वयं तं देवं वन्दामहे। अस्याः कन्यायाः हृदयं भयात् **वेपते**। अमुष्य नरस्य हृदयं न कम्पते। स शिक्षकः अमुष्यां शालायां पाठयति। जनाः अमुष्मिन् लोके मोक्षं लभन्ते। इमे पुरुषाः लाभेन **मोदन्ते**।

अयं **मोदकः** अस्यै कन्यायै न रोचते। अस्मै ब्राह्मणाय दक्षिणां देहि। अनयोः कन्ययोः पठनं मह्यं न रोचते। अमी देशाः मनोहराः। अयं बालकः स्वाचार्यं सेवते।

यदा पुरुषाः **म्रियन्ते** तदा तेषां प्राणाः **उद्गच्छन्ति**। एषु आसनेषु वयं उपविशामः अमीषु यूयम्। इमानि कार्याणि वयं आरभामहे।

**सहायतार्थ टिप्पणी**—वेप् = काँपना। मुद् = प्रसन्न होना। मोदकः = लड्डू। म्रियन्ते = मरते हैं। उद्गच्छन्ति = ऊपर चले जाते हैं। उपविश् = बैठना।

## अभ्यास ४

### ( लट् लकार )

सत्संगः वाचि सत्यं सिञ्चति। बालिका **पयसा** ओदनं खादति। नभसि नक्षत्राणि उदयन्ति। विहंगानां **चंचूः** भवति। सरसि कमलानि शोभन्ते। भूपः करिणं आरोहति। शशिनि कलंकोऽपि शोभते। उपकारिणः कीर्ति **दिक्षु** प्रसरति। स्वर्णकारः **हेम्ना** भूषणानि **घटयति**। रेणु उद्गच्छति। किं न सिध्यति। मृगैः मृगेन्द्रस्य क्षुधः शान्तिः **जायते**। तस्मै **विवादो** न रोचते। गगने खगाः उड्डीयन्ते। अश्वाः पुच्छं चालयन्ति। गोपाः पशून् पालयन्ति।

**सहायतार्थ टिप्पणी**—पयसा=दूध से। चंचू=चोंच। दिक्षु = दिशाओं में। हेम्ना=सोने से। घटयति=बनाता है। रेणुः = धूल। जायते = होती है। विवादो = बहस।

## अभ्यास ५

### ( लङ् लकार )

रामः सीतां **पर्यणयत्**। तां रावणोऽहरत्। रामरावणयोः युद्धं अभवत्। पञ्जरे एको मूषकः अभवत्। बहवः **श्वापदाः** अस्माद् वनात् निर्गच्छन्। गिरेः वयम् अवातराम। चौरः अलंकारं अचोरयत् तडागे **चाक्षिपत्**। पञ्जरेभ्यो विहगान् अमुञ्चाम।

ते कुसुमानां मालां कण्ठाद् **अपानयन्**। पण्डिताः नृपतेः सभां प्राविशन् **उपाविशन्** च तत्र। स धनं ऐच्छत्। आचार्यौ धर्मं उपादिशताम्। यूयं उद्यमेन धनं अलभध्वम। शृगालाः शवं अभक्षयन्। व्याघ्राणां **विरावैः** नार्याः हृदयं अवेपत्। अहं स्वपत्नया सह नद्यास्तीरे **अरमे**।

**सहायतार्थ टिप्पणी**—पर्यणयत् = विवाह किया। श्वापदाः = वन्य जन्तु। अक्षिपत् = फेंक दिया। अपनयन् = उतार दिये। उपादिशन् = बैठ गये। विरावैः=आवाज से। अरमे = (मैंने) विहार किया।

## अभ्यास ६

### ( लृट् लकार )

हरिद्वारं गमिष्यामि, तत्र गंगां **द्रक्ष्यामि,** सर्वेषां **विदुषां** पूजां च कृत्वा स्वकीयं ग्रामं प्रति **निवर्तिष्ये**। अध्यापकेन उपदिष्टोऽपि स्वपाठं न पठसि, यदा स द्रक्ष्यति तदा किं **प्रतिवक्ष्यसि ?**

आवां प्रयागं गमिष्यावः, किन्तु आवयोर्गृहे बहवो मूषका भवन्ति, आवयोः पुस्तकानि **छेत्स्यन्ति** इति शंकावहे।

यदि ब्रह्मचर्यं न धारयिष्यसि तु निश्चयं **सत्वरं** मरिष्यसि। यदा त्वं पठिष्यसि तदा **चपेटिकां** न **दास्यामि**। तुभ्यं को मोद**कानि** प्रदास्यति।

**सहायतार्थ टिप्पणी**—द्रक्ष्यामि = दृश् + लृट् लकार। विदुषाम् = विद्वानों की। निवर्तिष्ये = नि + वृत् (उत्तमपुरुष, एकवचन) + लृट् लकार।

प्रतिवक्ष्यसि = प्रति + वच् (मध्यम पुरुष एकवचन)+लृट् लकार । छेत्स्यन्ति= काट देंगे, कुतर देंगे । सत्वरं = शीघ्र । चपेटिकाम् = चपत । दास्यामि = दूँगा, लगाऊँगा । मोदकानि = लड्डू ।

## अभ्यास ७

### ( लोट् लकार )

अधुना पाठशालां गच्छत । तत्र पश्य एकोऽश्वो वर्तते न वा । कपीन् उद्याने मुञ्च । नरान् धर्मेण राजानः रक्षन्तु । प्रियशिष्याः स्वपूज्यान् पूजयत । बालकौ ! हस्तान् **प्रक्षालयताम्** । कन्ये ! मा लज्जां त्यज । नरौ ! अश्वमारोहताम् । वत्स ! हस्ताभ्यां स्वमातरं प्रणम । ममापराधान् क्षमस्व ।

सभायां वयं शोभामहे । ईश्वरस्य कृपायै **यतस्व** । तं अतिथिं आवां पूजयाव । यूयं गिरिं **नारोहत** । वनेषु **सायं नाट** । **कृषीबलाः** इमान् क्षेत्रान् कृशन्तु । पश्य पश्य **खञ्जः** कपिः गच्छति ।

**सहायतार्थं टिप्पणी**—प्र + क्षल् = धोना । यतस्व = प्रयत्न करो । नारोहत = न + आरोहत, मत चढ़ो । सायं = शाम को । नाट = न + अट = मत घूमो । कृषीवलाः = किसान लोग । खञ्जः = लँगड़ा ।

## अभ्यास ८

### ( विधिलिङ् )

पण्डितानां समाजे अपण्डितो **मौनं भजेत्** । दुःखेषु अपि धैर्यं न त्यजेत् । **भीरुभिः** सह आवां न वसेव । कञ्चन न अवधीरयेत् । इच्छामि जलं पिबेः त्वमिति ।

धनेन च कष्टेन च विद्या **विन्देत्** । तौ **अर्घ्यैः** देवान् पूजयेताम् । रविः प्रकाशेन संसारं पूरयेत् । पण्डिताः केभ्योऽपि न द्रुह्येयुः । पशून् सायं ग्रामं प्रति नयेत् । बालकाः ! यूयं स्वमित्रैः न युध्येध्वम् । सत्यं वदेत् प्रियं वदेत् किन्तु अप्रियं सत्यं कदापि न वदेत् ।

**सहायतार्थं टिप्पणी**—मौनं भजेत् = मौन या चुप रहे । भीरुभिः = डरपोकों के ( साथ ) । कञ्चन = कम् + चन = किसी को । अवधीरयेत् =

तिरस्कार या अपमान करे। विन्देत् = पावे, प्राप्त करे। अर्घ्यैः = अर्घ्यों से जल आदि से अर्घ्य प्रदान करके। अर्घ्यः = जलाञ्जलिः।

## अभ्यास ९

### ( वाच्य सम्बन्धी )

त्वं कुसुमैः पूज्यम्। **वायसेषु** शठैः बाणाः **क्षिप्यन्ते**। **प्रभुतेन** आतपेन जनाः पीड्यन्ते। बालकाभ्यां श्लोकः पठ्यते। सैनिकैः बाणाः **अस्यन्ते**। मया तु तल्लिख्यते यत् श्रूयते। बुधैः क्रोधः त्यज्यते। वयं मित्रेण त्यज्यामहे। यूयं सेवकैः सेवध्वे।

कमलानि नेत्राभ्यां दृश्यन्ते। व्याघ्रैः मृगो हन्यते। त्वया गृहं आगम्यते। अग्निना इन्धनं दह्यते। अस्मिन् लोके यत्क्रियते तस्य फलं **अमुष्मिन्** लोके अनुभूयते। मया अधुना पुस्तकं न पठ्यते। त्वया पुस्तके पठ्येते। ताभ्यां **नृपायोपहारः** कदा दीयते। पुरुषैः तु मुखैः एव जलं पीयते। दक्षिणा ब्राह्मणेभ्यः दीयते। नृपाणां आदेशः क्रियते। युवां जनेन **प्रेक्ष्येते**। रोगैः नराः पीड्यन्ते। सीता वने रावणेन ह्रियते। देशाः नृपेण जीयन्ते। वस्त्राणि **स्तेनेन** चोर्यन्ते। मया श्रूयते यत् युवाभ्यां संस्कृतं पठ्यते।

**सहायतार्थ टिप्पणी**—वायसेषु = कौओं पर। क्षिप् = फेंकना। प्रभूतेन = अत्यधिक। अस्यन्ते = फेंके जाते हैं। अमुष्मिन् = उस (लोक) में। नृपायोपहारः = नृपाय + उपहारः = राजा के लिये भेंट। प्रेक्ष् = प्र + ईक्ष् = देखना। स्तेनेन = चोर के द्वारा।

## अभ्यास १०

### ( प्रत्यय )

**शतृ**—पठन् विद्यार्थी **गुरवे** रोचते। नमन् शिष्यो गुरोः प्रियः भवति। गच्छन् पुरुषः फलानि अपश्यत्। दुग्धं पिबन् बालकः बलवान् भवति। धनिको दानं ददत् शोभते। स्वदेशदुर्दशां पश्यन् को न **विषीदति**। धनं **आप्नुवतां** जनानां **प्रकृतिः** परिवर्तते। त्वं मम गृहं पृच्छन् आगच्छ। चिन्तयन्ती शकुन्तला अत्रागच्छति।

**शानच्**—म्रियमाणः पुरुषः स्वकर्माणि स्मरति। शयानं शिशुं न **बोधय**। वर्धमानं पुत्रं दृष्ट्वा पिता **प्रहृष्यति**। यशो लभमानाः जनाः धनं न इच्छन्ति। सेवमानाय शिष्याय गुरुः विद्यां **यच्छति**। स्वकर्म कुर्वाणः श्रमिकः मृतः। फलं भुञ्जानः वानरः वृक्षात् अपतत्।

**तुमुन्**—अहं स्नातुं नदीं गच्छामि। सा भगवन्तं नन्तुं अत्रागताऽस्ति। पठितुं आगतोऽहं अत्र। इन्द्रियाणि विजेतुं पुरुषः **प्रयतेत**। जलं पातुं **पान्थः** कूपं प्रति अगच्छन्। गुरोः धनं हर्तुं देवदत्तः **यतते**। किंचित् अपि वक्तुं न समर्थोऽस्मि। शिशुः स्वप्तुं इच्छति। पुत्राः पितॄन् सुखं दातुं प्रयतन्ते। वृद्धाः अपि मर्तुं न इच्छन्ति। बालकः पुस्तकं चोरयितुं प्रयतते। तस्याः सुमधुरं गानं श्रोतुं मम हृदयं समुत्सुकं विद्यते। कार्यमिदं कर्तुं सः न **प्रभवति**। इदानीं स्वगृहं गन्तुं इच्छामि। स्वभगिनीं अवलोकयितुं अस्ति मे महान् अभिलाषः। अयं छात्रः श्लोकमेकं पठितुं अत्रागतः।

**सहायतार्थ टिप्पणी**—(१) गुरवे = गुरु को। विषीदति = दुखी होता है। आप्नुवतां = पाने वालों की। प्रकृतिः = स्वभाव। (२) बोधय = जगाओ। यच्छति = देता है। प्रहृष्यति = खुश होता है। (३) प्रयतेत = प्रयत्न करे। पान्थः = राहगीर। यतते = कोशिश करता है। प्रभवति = समर्थ होता है।

## अभ्यास ११

### ( कृदन्त )

**क्त्वा**—विद्यालये पठित्वा शिशवः गृहं गच्छन्ति। वृद्धो मृत्वा शिशुर्भूत्वा पुनर्जन्म गृह्णाति। माता मिष्टान्नं**पक्त्वा** पुत्रं **भोजयति**। पितरं नत्वा मे मनः **प्रसीदति**। लंकां गत्वा रामो रावणं हतवान्। अत्र **स्थित्वा** पाठं स्मर। **पानीयं** पीत्वा पान्थः पुनरपि **प्रस्थितः**। इन्द्रियाणि जित्वा मनुष्यः सुखी भवति। धनं **आप्त्वा** को न हृष्यति? जननी प्रसववेदनां सहित्वा पुत्रं जनयति। एवं उक्त्वा विरराम नारदमुनिः। गां दुग्ध्वा **वत्साय** अपि दुग्धं देहि।

**क्त**—मे **पिधानं** चोरितं रामेण, पितुर्लेखिनी चोरिता देवदत्तेन। मया **क्रीतानि** एतानि पुस्तकानि रामेण विद्यालयात् अमरकोषः गृहीता। न

कृतं किमपि अपराधं मया । मया तु अनन्तवेदना **सोढा** । स्वकर्त्तव्यं कृत्वा यशो लभते जनः । मया पृष्टा सा रोदनं प्रारभत् । रामेण हतो बालिः । मम मित्रेण अयं उपहासे दत्तो भवत्यै । मया तानि पत्राणि पठितानि ।

**तव्यत्**—अस्माभिः गीता अवश्यमेव पठितव्या । अद्य **ओदनं** न पक्तव्यम् । गुरवः सदा सर्वत्र नन्तव्याः । अस्माभिः प्रातःकाले उत्थातव्यम् । मनुष्येण सुकर्म एव कर्त्तव्यम् । त्वया दुग्धं पातव्यं न पानीयम् । राज्ञा शत्रवः जेतव्याः । परेभ्यः दुःख न दातव्यम् । परेषां सुगुणाः चोरयितव्या । दुर्गुणाः कदापि न ग्रहीतव्या ।

**अनीयर्**—पठनीयमिदं पुस्तकमस्ति । जनेषु सद्गुणाः स्पृहणीयाः सन्ति । कस्यापि कदापि **अनिष्टं न** चिन्तनीयम् । गीता तु अस्माभिः अवश्यमेव पठनीया ।

**सहायतार्थ टिप्पणी**—(१) पक्त्वा = पका कर । भोजयति = खिलाती है । प्रसीदति = प्रसन्न होता है । स्थित्वा = बैठकर । पानीयं=जल । प्रस्थितः= चल पड़ा । आप्त्वा = पाकर । वत्साय = बछड़े को । (२) पिधानं = तकिया । क्रीतानि = खरीदीं । सोढा=बर्दाश्त की, सहन की । (३) ओदनं= चावल, भात । (४) अनिष्टं = बुरा, अनहित ।

## अभ्यास १२

### ( प्रेरणार्थक धातुयें )

नाहं मूर्खान् अध्यापयामि । **कर्कश**वचनैः हृदयं न दाहय । रात्रौ मातरः शिशून् **दोलायां** स्वापयन्ति । तृषितान् जलं पायय, क्षुधितान् च अन्नं भोजय । कृष्णः सर्वान् दैत्यान् अनाशयत् । सीता वनवासकालं अस्मारयत् । सः स्वकार्यं स्वयमेव न करोति अन्यैस्तु कारयति । वानरः **स्वोदरं** अदर्शयत् । बुद्धो भिक्षुभ्य उपदेशं अश्रावयत् । राजा निर्धनेभ्यः धनं दापयति । **सूपकारः** तण्डुलं **स्वदारकेण** पाचयति । राजा स्वशत्रून् घातयति । राजा स्वपुत्रान् विष्णुशर्मणः समीपं गमयति । जननी शिशुं **क्षीरं** पाययति । मूर्खाः स्वपुत्रान् न पाठयन्ति ।

**सहायतार्थ टिप्पणी**—कर्कश = कठोर । दोलायां = झूले में । स्वोदरं= अपना पेट । दारकेण = लड़के से । क्षीरम् = दूध ।

# अभ्यास १२

## ( उपसर्ग धातुयें )

लोभात् क्रोधो **प्रभवति** । सज्जनाः सुखं अनुभवन्ति । ऋषयः उपदिशन्ति । बलवान् दुर्बलान् **पराभवति** । अयं उपायः **सम्भवति** । न **अवगच्छामि** ते गतिम् । जनाः स्वकर्मणां फलं **अधिगच्छन्ति** । लक्ष्मणः रामं अनुगच्छति । रामः नगरात् निर्गच्छति । सः अत्र आगच्छन्ति । मुनिः व्रतं **अनुतिष्ठति** ।

कृष्णः पीठात् **उत्तिष्ठति** । कविः काव्यं **प्रणयति** । **अपनेष्यामि** ते दर्पम् । पुस्तकं आनय । गुरुः शिष्यं **उपनयते** । रामः सीतां **पर्यणयत्** । सीता रामं **अनुनयति** । पिता पुत्राणां कलहं निर्णयति । देवदत्तः देवेभ्यः बलिं **उपहरति** । द्विजः पुष्पाणि **आहरति** ।

रावणः सीतां **अपाहरत्** । किं सन्दिशति भवान् ? किं **आदिशति** प्रभुः ? सः वैदिकं कर्म आचरति । सत्यमार्गं अनुचरेत् । सेवकाः स्वामिन अनुचरन्ति । सेविका स्वस्वामिनीं **परिचरति** । वने व्याघ्रः **संचरति** । सः स्ववक्तव्यं **संक्षिपति** ।

सः गुरुवर्यं **आक्षिपति** । महात्मनः सर्वत्र **प्रसरति** । सीता रामं वने अनुसरति । मम गृहात् दूरं **अपसर** । वानराः बालकं **अनुकुर्वन्ति** । **प्रकृत्या** उपकुर्वन्ति साधवः । असाधवः सर्वदा अपकुर्वन्ति । मे चेतः **प्रसीदति** । **विषीदति** मे मानसम् ।

सन्ध्यासमयः **प्रत्यासीदति** । यूयं अत्र प्रार्थनार्थं **निषीदत** । भगवन् ! मां **अनुगृहाण** । भ्रातरः न **विगृह्णन्तु** । इन्द्रियाणि **निगृह्णन्तु** । पितः ! **अनुजानीहि** मां वनगमनाय । राजा स्वपुत्राय राज्यं **प्रतिजानीते** ।

**सहायतार्थ टिप्पणी**—प्रभवति = पैदा होता है । पराभवति=अपमान करता है । सम्भवति = सम्भव है । अवगच्छामि = जानता हूँ । अधिगच्छन्ति पाते हैं । अनुतिष्ठति = करता है ।

उत्तिष्ठति = उठता है । प्रणयति = रचता है, बनाता है । अपनेष्यामि = दूर करूँगा । उपनयते = जनेऊ करता है । पर्यणयत् = विवाह किया ।

अनुनयति = चिरौरी करती है, प्रार्थना करती है। उपहरति = भेंट देता है। आहरति = लाता है।

अपाहरत् = हर लिया। आदिशति = आज्ञा देता है। परिचरति=सेवा करती है। संचरति = घूमता है। संक्षिपति=संक्षिप्त करता है। आक्षिपति= आक्षेप करता है, दोष लगाता है। प्रसरति = फैलता है।

अपसर = दूर हट। अनुकुर्वंति=नकल करते हैं। प्रकृत्या = स्वभाव से। प्रसीदति = प्रसन्न होता है। विषीदति = दुःखी होता है।

प्रत्यासीदति = समीप आता है। निषीदत = बैठ जाओ। अनुगृहाण = अनुगृह करो, दया करो। विगृह्णन्तु = लड़ाई झगड़ा करें। निगृह्णन्तु = रोकें। अनुजानीहि = आज्ञा दो। प्रतिजानीते = प्रतिज्ञा करता है।

## अभ्यास १४

### ( उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः )

संसारे सर्वाणि **लघूनि महान्ति** च कार्याणि उद्योगेन एव सिध्यन्ति। उद्योगं विना कोऽपि किंचित् कार्यं **साधयितुं** न शक्नोति। छात्राः उद्योगेन एव परीक्षायां **उत्तीर्णाः** भवन्ति।

उद्योगिनः पुरुषस्य संसारे **महती** प्रशंसा भवति। उद्योगी मनुष्यः स्वदेशस्य स्वजातेः समाजस्य च कल्याणं करोति। उद्योगिनं पुरुषं कदापि आलस्यं न पराजयते। सः संसारे **मृत्योः** पश्चादपि यशः शरीरेण जीवन् तिष्ठति।

उद्योगस्य त्यागेन आलस्यं **उत्पद्यते**। तेन मनुष्यः जीवने सदा दुःखं एव अनुभवति। अलसस्य पुरुषस्य मनोऽपि **कुत्सितेषु कर्मसु प्रवर्तते**। अतो वयं आलस्यं शत्रुमिव **अवधूय** श्रमं आचरेम।

**सहायतार्थ टिप्पणी**—लघूनि = छोटे। महान्ति = बड़े। साधयितुं = पूरा करने में। उत्तीर्णाः = सफल, पास। महती = बड़ी। मृत्योः = मृत्यु के। उत्पद्यते = पैदा होता है। कुत्सितेषु = बुरे। कर्मसु = कामों में। प्रवर्तते = लगता है। अवधूय = हटाकर, दूर करके।

## अभ्यास १५

### ( न हि सत्यात् परो धर्मः )

सत्येन तुल्यः कश्चित् अन्यो धर्मो नास्ति सत्यस्य सेवनात् **मनसो** दोषाः नश्यन्ति। मनः पवित्रं च भवति। **आत्मनि** सुखस्य शान्तेश्च **उदयो** जायते। सत्ये सर्वे सद्गुणाः वसन्ति। सत्ये क्वचित् भयं नास्ति। सत्यवादी सदा निर्भयः **तिष्ठति**।

अस्माकं भारतवर्षे अनेके सत्यस्य सेवकाः जनाः अभवन्। तेषां कीर्ति-कथा जगत् पवित्रीकरोति। हरिश्चन्द्रस्य नृपतेः नाम सर्वे जनाः सादरं **स्मरन्ति**। महात्मा गान्धिरपि सत्यस्य परमो भक्तः आसीत्।

सत्यं उन्नतेः द्वारं अस्ति। असत्यात् **परं** किमपि **अन्यत् पातकं** नास्ति। अतः सत्यं जीवनस्य **सारं ज्ञात्वा** सदा सत्यं वदेत्, सत्यं आचरेत् सत्यं सेवेत।

**सहायतार्थं टिप्पणी**—मनसो=मन के। आत्मनि=आत्मा में। उदयो=जन्म। तिष्ठति=रहता है। स्मरन्ति=याद करते हैं। परं=बढ़कर। अन्यत्=दूसरा। पातकम्=पाप। सारं=तत्व। ज्ञात्वा=जानकर।

## अभ्यास १६

### ( दीपावली: )

देशेऽस्मिन् सन्ति **चत्वारः** प्रधानोत्सवाः। इमे चत्वारोऽपि उत्सवाः क्रमशः ब्राह्मणक्षत्रियवैश्यशूद्राणां **कृते** निर्मिताः सन्ति। परन्तु दीपमालिका उत्सवस्य माहात्म्यं सर्वेभ्योऽप्याधिकं **वर्तते**। सर्वं एव **वर्णाः** इमं उत्सवं **आमनन्ति**। अयं उत्सवः कार्तिकमासस्य कृष्णे पक्षे भवति।

जनाः अस्मिन् दिने स्वगृहान् **लिम्पन्ति** भूषयन्ति च। परस्परं मिष्ठान्नस्य आदान-प्रदानं भवति। सायंकाले च जनाः स्व स्व गृहद्वारेषु अभ्यन्तरेषु **अट्टालिकासु** च पंक्तिवद्धान् सुशोभितान् दीपकान् **प्रज्वाल-यन्ति**। रात्रौ तु **स्वर्गायते** मृत्युलोकः।

अस्य महोत्सवस्य **'द्यूतक्रीडा'** कलंकोऽस्ति। अनया देशस्य महान् **अपकारो** भवति। बहवो जनाः द्यूते सर्वस्वं विनाशयन्ति। अस्य **निराकरणं** शीघ्रमेव कर्त्तव्यम्।

**सहायतार्थ टिप्पणी**—चत्वारः = चार । कृते = लिये । वर्तते = है । वर्णाः = जातियां । आमनन्ति = मानते हैं । लिम्पन्ति = लीपते हैं, पोतते हैं । अट्टालिकासु = अटारियों पर । प्रज्वालयन्ति = जलाते हैं । स्वर्गायते = स्वर्ग तुल्य दीखने लगता है । द्यूतक्रीडा = जुआ का खेल । अपकारः = नुकसान । निराकरणम् = दूर करना ।

## अभ्यास १७

### ( ब्रह्मचर्यम् )

बालकाः विद्याध्ययनाय यत् व्रतं आचरन्ति तत् ब्रह्मचर्यनाम्ना प्रसिद्धम् । ब्रह्मचर्यं एक महत् तपोऽस्ति । अनेन **तपसा** देवाः मृत्युं जित्वा अमरत्वं **अलभन्त** । ब्रह्मचर्येण शरीरं स्वस्थं पुष्टं कान्तियुक्तं च भवति । ब्रह्मचर्येण मस्तिष्कस्य विकासो भवति । बुद्धिः शुद्धा **तीव्रा** च जायते । इदं विद्याध्ययने महती सहायतां करोति । ब्रह्मचर्येण अस्माकं पूर्वजाः बलवन्तः तेजस्विनः **विद्वांसः दीर्घजीविनश्च** अभवन् । अतएव चतुर्षु आश्रमेषु ब्रह्मचर्याश्रमः एव **प्रथमः** अस्ति । अस्य आश्रमस्य सेवनेन अन्ये आश्रमाः **सम्यक्** सेविताः सुखमयाः च भवन्ति ।

ब्रह्मचर्यस्य प्रभावेण एव **पवनतनयः** गिरिं अपि **कन्दुकमिव** अतोलयत् । अपारं सागरं च **गोष्पदम्** इव अलंघयत् । **पितामहः** भीमः अपि अस्यैव प्रतापेन स्वगुरुं **जामदग्न्यं** अजयत् । **किं बहुना** मृत्युं अपि मुष्टिगतं चकार ।

**सहायतार्थ टिप्पणी**—तपसा = तपस्या से । अलभन्त = पा लिया । तीव्रा = तेज । विद्वांसः = विद्वान्, ज्ञानवान् । दीर्घजीविनः = लम्बी उमर वाले । प्रथमः = सर्वोत्तम । सम्यक् = भली प्रकार से । पवनतनयः = हनुमान । कन्दुकमिव = कन्दुकम् + इव = गेंद के समान । गोष्पदम् = गाय के खुर का चिह्न । पितामहः = बाबा । जामदग्न्यं = परशुराम जी को । किं बहुना = अधिक क्या कहें ।

## अभ्यास १८

### ( निद्रा )

निद्रा नामजीवानां हितकरी वृत्तिः **शरीरस्थितेः** सहायभूता । इयं हि यथा कालं सेविता परमानन्दं जनयति, क्लेशान् **अपहन्ति, श्रान्तिं** च अपनयति, शोकं दूरीकरोति, **शरीरावसादं** नाशयति, वातादि धातु **साम्यं** विधत्ते, चेतसि **प्रसादं** तनुते, अन्तः किमपि **ओजः** सन्दधाति, दुश्चिन्तां निवारयति विस्मारयति च चिरवैरम् । किम्बहुना कुरुते हि **स्वावसाने** सर्वथा जीवान् पुनर्नवाभूतानेव ।

**निद्रानिष्ठं** जीवं क्षुधा न बाधते, न तृष्णा तापयति । निद्रितस्य न विद्यते कापि शंका, नैव मनोव्यथा । निद्रा नाम स्नेहमयी जननीव सर्वथा जीवान् पुत्रानीव सुखयति कान्तेव च ब्रह्ममयी लोचने दृढं परिचुम्ब्य समानन्दयति **नितरां** जीवसमूहम् ।

**सहायतार्थ टिप्पणी**—शरीरस्थितिः=शरीर का निर्वाह । अपहन्ति= मिटाता या दूर करता है । श्रान्तिः = थकावट । शरीरावसादं = शरीर की थकावट या कमजोरी । प्रसादः = प्रसन्नता । ओजः = बल, तेज । साम्यं = समता । स्वावसान = अपना अन्त । निद्रानिष्ठ = सोया हुआ । क्षुधा=भूख । नितरां = बहुत अधिक ।

## अभ्यास १९

### ( ईश्वरः )

ईश्वरोऽस्माकं सर्वेषां पिता **वर्तते** । तेन इदं सर्वं रचितम् । अहमपि तेनैव रचितः । स महघं शीतलं वायुं यच्छति । **पानाय** च निर्मलं जलमपि तेनैव दत्तम् । यथाहं पुत्रो **वर्ते** तथैव अन्येऽपि तस्य पुत्रा **भवन्ति,** अतः कोऽपि न पीडनीयः । यदा अस्माभिः शयनं क्रियते तदापि स एव अस्मान् रक्षति । स सर्वत्र व्यापको भवति । स सर्वदा मां पश्यति । **अतो** मया कदापि पापं न कर्तव्यम् ।

**सहायतार्थ टिप्पणी**—वर्तते = है । पानाय = पीने के लिये । वर्ते = हूँ । भवन्ति = हैं, रहते हैं । अतो = अतः, इसलिये ।

## अभ्यास २०

### ( मूर्खसेवकः )

कस्यचित् राज्ञो नित्यमेको मूर्खः अतिभक्तिपरः अंगसेवकः **अन्तःपुरेऽपि अप्रतिषिद्धप्रसरः** अतिविश्वास**स्थानं** अभवत्। एकदा राज्ञि निद्रां गते, सेवके च **व्यजनं** नीत्वा वायुं कुर्वति, राज्ञो वक्षस्थलोपरि **मक्षिकाः उपविष्टाः।** व्यजनेन **मुहुर्मुहुः निषिध्यमाना** अपि पुनः पुनः तत्रैव उपविशन्ति स्म। ततः तेन स्वभावचपलेन मूर्खसेवकेन क्रुद्धेन सता **तीक्ष्णं खड्गमादाय** तस्योपरि प्रहारो **विहितः।**

ततो मक्षिकाः **उड्डीय** गताः, तेन **शितधारेण असिना** राज्ञो **वक्षो द्विधा** जातं, स **पञ्चत्वं गतश्च।**

**तस्मात्** स्वकल्याणं इच्छता केनापि मूर्खोऽनुचरः स्वकार्ये न **नियोजनीयः।**

**सहायतार्थ टिप्पणी—**अन्तःपुरेऽपि = रनिवास में भी। अप्रतिषिद्ध = बेरोक-टोक। प्रसरः = आना जाना। स्थानं = पात्र। व्यजनं = पंखा। मक्षिकाः = मक्खियां। उपविष्टाः = बैठ गईं। मुहुर्मुहुः = बार-बार। निषिध्यमाना = उड़ाई जाने पर भी। तीक्ष्णं = तेज, पैनी। खड्गमादाय = खड्गम् + आदाय = तलवार लेकर। विहितः = किया। उड्डीय = उड़कर। शितधारेण = तेज धार वाली। असिना = तलवार से। वक्षो = छाती। द्विधा = दो टुकड़े। पञ्चत्वं गतः = मर गया।

तस्मात् = इसलिये। नियोजनीयः = रखना चाहिये, नियुक्त करना चाहिये।

## अभ्यास २१

### ( महाश्वेतावृत्तान्तः )

अथैकदा **मधुमास**दिवसेषु अम्बया सममिदं अच्छोदं नाम सरः स्नातुं **अभ्यागतया** मया कपिञ्जलपुण्डरीकौ नाम मुनिकुमारौ दृष्टौ, पुण्डरीककर्णे एका कुसुममञ्जरी च दृष्टा।

तं तपोधनं **कुमारमीक्षमाणा** अहं नवयौवनसुलभेन कुसुमायुधेन परवशीकृता **अभवम्। तस्मै सविभ्रमं** प्रणामश्च कृतवती।

कृतप्रणामायां मयि मद्विकारदर्शनापहृतधैर्यं तमपि कुमारं तरलतां अनयत् **अनङ्गः** ।

अथ मुहूर्तमिव स्थित्वा द्वितीयं मुनिकुमारं कपिञ्जलं नामानम् **उपसृत्य** प्रणामपूर्वकम् अपृच्छम्—

"भगवन् ! **किमभिधानः** कस्य वायं कुमारः, किं नाम्नस्तरोः इयं अनेन **अवतंसीकृता** कुसुममञ्जरी" इति ।

**सहायतार्थ टिप्पणी**—मधुमास = वसन्त । अभ्यागतया = आई हुई । कुमारमीक्षणमाणा = कुंवारा (अविवाहित) ही हैं ऐसा अनुमान करती हुई । सविभ्रमं = बड़ी अदा के साथ । अनङ्ग = कामदेव । उपसृत्य = पास जाकर । किमभिधानः = क्या नाम है । अवतंसीकृता = आभूषण के रूप में धारण कर रखी है ।

## अभ्यास २२

### ( दुष्यन्तः शकुन्तला च )

पुरा किल दुष्यन्तो नाम राजा बभूव । स एकदा **मृगयां** कर्तुं वनं **इयाय** । तस्य सैनिकाः **अमात्याश्च** तं **अनुजग्मुः** । अस्मिन् कानने दुष्यन्तो बहून् मृगान् **जघान** । एकं मृगं **पलायमानं अनुसरन्** दिव्यं आश्रमं **ददर्श** । तस्य सैनिकाः पूर्वस्मिन् एव स्थाने **तस्थुः** । कण्वस्य ऋषेः आश्रमोऽयं इति ज्ञात्वा तं प्रविवेश । प्रविश्य च कोनु भो अत्र इति **पप्रच्छ** ।

कण्वस्य कृतिका **दुहिता** शकुन्तला आश्रमाद् बहिः **आगत्य** स्वागतं **व्याजहार** । शकुन्तलां चारुसर्वांगीं दृष्ट्वा दुष्यन्तः तां **चकमे** । तस्याः **पाणिं** गान्धर्वेण विधिना राजा **जग्राह** ।

अनन्तरं कश्चित् कालं **तावुभौ** तस्मिन्नाश्रमे **चिक्रीडतुः** । रममाणं राजानं **प्रेक्ष्य** सैनिकाः पुरं **निववृतिरे** । राजापि पश्चात् स्वनगरं **उपययौ** ।

तदनु कण्वाज्ञया शकुन्तला दुष्यन्तराजधानीं प्रति **प्रतस्थे** । तत्र गत्वा राजानं **सभागतं** ददर्श । दुष्यन्तः तु तां पूर्वं **विसस्मार** किन्तु पश्चात् तां **भार्यात्वेन** स्वीचकार ।

**सहायतार्थ टिप्पणी**—मृगया = शिकार । इयाय=गया । अमात्याश्च=

अमात्याः + च = मन्त्री लोग । अनुजग्मुः = पीछे-पीछे चलने लगे । जघान = मारा । पलायमानं = भागते हुये । अनुसरन् = पीछा करते हुये । ददर्श = देखा । तस्थुः = छूट गये, रुक गये । पप्रच्छ = पूछा ।

दुहिता = बेटी । आगत्य = आकर । व्याजहार = कहा, बोली । चकमे = इच्छा की । जग्राह = ग्रहण किया । पाणिं = हाथ को ।

तावुभौ = तौ + उभौ = वे दोनों । चिक्रीडतुः = खेलते रहे, क्रीडा करते रहे । प्रेक्ष्य = देखकर । निववृतिरे = लौट गये । उपययौ = पहुँचा, गया ।

प्रतस्थे = चल पड़ी, प्रस्थान किया । सभागतं = सभा में बैठे हुये । विसस्मार = भुला दिया, नहीं पहचाना । भार्यात्वेन = पत्नी के रूप में ।

## अभ्यास २३

### ( चञ्चला लक्ष्मीः )

आसीत् जयन्ती नाम पुरी । तस्यां उपक्रमो नाम राजा बभूव । स च **शौर्योपार्जितबहुवित्तो नीतिनेत्रो** बहुपुत्रश्च परमकृतार्थो बभूव । एकदा रात्रौ निजगृहे सुखं **शयानः** स्त्री क्रन्दनं शुश्राव । पश्चात् तं स्त्रीक्रन्दनं एव इति निश्चित्य बहिः निर्जगाम । रोदनरवानुसारेण गच्छन् नगराद् बहिः कियत्यपि सर्वावयवसुन्दरीं स्त्रियमेकां रुदतीं ददर्श ।

राजोवाच—आर्ये सुन्दरि ! केन दुःखेन रोदिषि ?

सुन्दर्युवाच—राजन् ! तवाहं लक्ष्मीः **इयद्दिनपर्यन्तं** शूरस्य नयशालिनस्तव भुजच्छायायां स्थितास्मि । इदानीं अन्यत्र गच्छामि । इति **रोदिमि** ।

राजोवाच—तर्हि रुद्यते कुतः ।

लक्ष्मीरुवाच—तवानुरागेण ।

राजा—यदि अनुरागः तदा त्यागे को हेतुः ?

लक्ष्मीः—त्वं न जानासि । लक्ष्मीरहं **चलप्रकृतिः** नैकत्र चिरं वस्तुमिच्छामि ।

**सहायतार्थ टिप्पणी**—शौर्योपार्जित = पराक्रम से कमाया हुआ । बहुवित्तः = अधिक धनवान् । नीतिनेत्रो = नीतिमान् । शयानः = सोया हुआ । इयद्दिनपर्यन्तम् = आज तक । रोदिमि = रोती हूँ । चलप्रकृतिः = चंचल स्वभाव की ।

## अभ्यास २४

(१) **वासांसि जीर्णानि** यथा **विहाय,** नवानि गृह्णाति नरोपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि **संयाति** नवानि **देही** ॥

(२) कुमुद**वनमपश्रि** **श्रीमदम्भो**जखण्डं,
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदय**महिमरश्मिर्याति शीतांशु**रस्तं,
हतविधिनिहतानां हा ! विचित्रो विपाकः ॥

(३) पद्माकरं दिनकरो **विकचीकरोति,**
चन्द्रो विकासयति कैरवचक्रवालम्।
**नाभ्यर्थितो** जलधरोऽपि जलं ददाति,
सन्तः स्वयं परहितेषु कृताभियोगाः ॥

(४) गुणा गुणज्ञेषु गुणा भवन्ति, ते निर्गुणं **प्राप्य** भवन्ति दोषाः।
**आस्वाद्यतोयाः** प्रवहन्ति नद्यः, समुद्र**मासाद्य** भवन्त्यपेयाः ॥

(५) अयं **परो** म पितुरंगभूषणं, **पितामहाद्यै**रुप**भुक्त**यौवनम्।
अलंकरिष्यत्यथ पुत्रपौत्रकान्, मयाऽधुना पुष्पवदेव धार्यते ॥

**सहायतार्थ टिप्पणी**—(१) वासांसि = कपड़े। जीर्णानि = पुराने। विहाय = छोड़ कर। सयाति=चली जाती है। देही=आत्मा। (२) अपश्रि = शोभाहीन। श्रीमत् = शोभायुक्त। मुदम् = प्रसन्नता। अहिमरश्मि = सूर्य। शीतांशु = चन्द्रमा। (३) विकची करोति = खिला देता है। नाभ्यर्थिता = बिना माँगे ही। (४) प्राप्य = पहुँच कर। आस्वाद्यतोयाः = पीने योग्य पानी वाली। आसाद्य = प्राप्त करके, पहुँच करके। (५) पटो = कपड़ा, वस्त्र। मितामहाद्यैः = बाबा आदि ने।

## अभ्यास २५

(१) प्राक् पादयोः पतति खादति पृष्ठमांसं,
कर्णे कलं किमपि रौति शनैर्विचित्रम्।
छिद्रं निरूप्य सहसा प्रविशत्यशंकं,
सर्वं खलस्य चरितं मशकः करोति ॥

( २ ) प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता **विरमन्ति** मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
**प्रारब्ध**मुत्तमजनाः न परित्यजन्ति ॥

( ३ ) निन्दन्तु नीतिनिपुणा यदि वा **स्तुवन्तु**,
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा,
न्याय्यात् **पथः प्रविचलन्ति** पदं न धीराः ॥

( ४ ) उचितमनुचितं वा कुर्वता **कार्यजातं**,
**परिणतिरवधार्या** यत्नतः पण्डितेन ।
**अतिरभस**कृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाहो **शल्य**तुल्यो विपाकः ॥

( ५ ) न चौरहार्यं, न च राजहार्यं,
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं,
विद्याधनं सर्वधनप्रधानम् ॥

**सहायतार्थ टिप्पणी :—**

( १ ) रौति = शब्द करता है । निरूप्य = देखकर ।

( २ ) विरमन्ति = रुक जाते हैं । प्रारब्धम् = शुरु किये हुये काम को ।

( ३ ) स्तवन्तु = प्रशंसा करें । समाविशतु = आवे । प्रविचलन्ति=हटाते हैं । पथः = मार्ग से ।

( ४ ) कार्यजातं = काम । परिणतिः = परिणाम । अवधार्या = सोच लेना चाहिये । अतिभस = अत्यन्त शीघ्र । शल्य = घाव ।

## अभ्यास २६

( १ ) कर्मण्येवाधिकारस्ते मा फलेषु **कदाचन** ।
मा कर्मफल**हेतुर्भूः** मा ते **संगोऽस्त्वकर्मणि** ॥

(२) नैनं छिन्दति शस्त्राणि नैनं दहति **पावकः** ।
न चैनं **क्लेदयन्त्यापो** न शोषयति **मारुतः** ॥

(३) **देहिनो**ऽस्मिन् यथा देहे कौमारं यौवनं **जरा** ।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥

(४) यदा यदा हि धर्मस्य **ग्लानिर्**भवति **भारत** ।
अभ्युत्थानमधर्मस्य **तदात्मानं** सृजाम्यहम् ॥

(५) त्वमादिदेवः पुरुषः पुराणः, त्वमस्य विश्वस्य परं निधानम् ।
**वेत्तासि वेद्यं** च परं च **धाम,** त्वया **ततं** विश्वमनन्तरूप ॥

(६) यथा प्रदीप्तं **ज्वलनं** पतङ्गा, **विशन्ति** नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकाः, तवापि **वक्त्राणि** समृद्धवेगाः ॥

(७) **त्रिविधं** मे नरकस्येदं द्वारं **नाशनमात्मनः** ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥

**सहायतार्थ टिप्पणी**—कदाचन = कभी भी । हेतुर्भुः=हेतुः+भूः=कारण बनो । सङ्गोऽस्वकर्मणि = सङ्गः = अस्तु = अकर्मणि = अकर्मण्यता में आसक्ति होवे ।

क्लेदयन्त्यापो = क्लेदयन्ति + आपः = जल भिगो सकता है । मारुतः = हवा ।

देहिनः = शरीरधारी की, मनुष्य की, आत्मा की । जरा = बुढ़ापा ।
ग्लानिः = हानि । भारत = हे अर्जुन । तदात्मम् = तब अपने आप को ।
वेत्तासि = वेत्ता + असि = जानने वाले हो । वेद्यं=जानने योग्य । धाम = स्थान, लोक, मरणस्थान । ततम् = व्याप्त ।

ज्वलनं = आग में । विशन्ति = प्रवेश करते हैं । वक्त्राणि = मुखों में ।
त्रिविधं=तीन प्रकार का । नाशनमात्मनः=नाशनम् + आत्मनः = अपना नाश करने वाला ।

# पञ्चमोऽध्यायः

## [ क ] अशुद्धि-संशोधन

### अभ्यास १

| अशुद्धः | शुद्धः |
|---|---|
| १. रामः च कृष्णः गच्छति । | १. रामः कृष्णश्च गच्छतः । |
| २. जनाः महति विपदि सन्ति । | २. जनाः महत्यां विपदि सन्ति । |
| ३. सर्वाः नराः खादन्ति । | ३. सर्वे नराः खादन्ति । |
| ४. त्रयः बालिकाः नृत्यन्ति । | ४. तिस्रः बालिकाः नृत्यन्ति । |
| ५. पिता मां क्रुध्यति । | ५. पिता मह्यं क्रुध्यति । |
| ६. हे रामागच्छ । | ६. हे राम ! आगच्छ । |
| ७. देवदत्तः लक्ष्मणपुरे अनिवसत् । | ७. देवदत्तः लक्ष्मणपुरे न्यवसत् । |
| ८. भवान् कुत्र गच्छसि ? | ८. भवान् कुत्र गच्छति ? |
| ९. हरिः मम मित्रः अस्ति । | ९. हरिः मम मित्रम् अस्ति । |
| १०. सः प्राणं बिभर्ति । | १०. सः प्राणान् बिभर्ति । |
| ११. त्वं आचार्यस्य प्रेमपात्रः भव । | ११. त्वं आचार्यस्य प्रेमपात्रं भव । |
| १२. मम मने सन्देहो वर्तते । | १२. मम मनसि सन्देहो वर्तते । |
| १३. केन पथेन गन्तव्यम् ? | १३. केन पथा गन्तव्यम् ? |
| १४. रामोवाच । | १४. राम उवाच । |
| १५. रामो सुखेन वसति । | १५. रामः सुखेन वसति । |

### अभ्यास २

| अशुद्ध | शुद्ध |
|---|---|
| १. अहं चन्द्रमां पश्यामि । | १. अहं चन्द्रमसं पश्यामि । |
| २. मां भोजनं देहि । | २. मह्यं भोजनं देहि । |
| ३. सः पापैः मां वारयति । | ३. सः पापेभ्यः मां वारयति । |
| ४. नगरस्य बहिः धर्मशाला अस्ति । | ४. नगराद् बहिः धर्मशाला अस्ति । |
| ५. इदं मम भ्राता । | ५. अयं मम भ्राता । |

| अशुद्ध | शुद्ध |
|---|---|
| ६. अहं तव शतं धारयति । | ६. अहं तुभ्यं शतं धारयामि । |
| ७. अहं गृहस्य प्रति गच्छामि । | ७. अहं गृहं प्रति गच्छामि । |
| ८. नदीभिः गंगा श्रेष्ठा । | ८. नदीनां नदीषु वा गंगा श्रेष्ठा । |
| ९. त्वं लेखन्या लिखति । | ९. त्वं लेखन्या लिखसि । |
| १०. रामः नेत्रस्य काणः अस्ति । | १०. रामः नेत्रेण काणः अस्ति । |
| ११. रामस्य सह गृहं गच्छ । | ११. रामेण सह गृहं गच्छ । |
| १२. ज्ञानस्य विना न मुक्तिः । | १२. ज्ञानं ज्ञानेन ज्ञानाद् वा विना न मुक्तिः । |
| १३. गुरुः मां कुप्यति । | १३. गुरुः मह्यं कुप्यति । |
| १४. सः फलस्य भोक्तुं इच्छति । | १४. सः फलं भोक्तुं इच्छति । |
| १५. देवदत्तः गृहे गच्छति । | १५. देवदत्तः गृहं गच्छति । |

## अभ्यास ३

| अशुद्ध | शुद्ध |
|---|---|
| १. देवदत्तस्य ग्रामस्य बहिः एकः शिवालयः अस्ति । | १. देवदत्तस्य ग्रामाद् बहिः एकः शिवालयः अस्ति । |
| २. पिता पुत्रस्य कुप्यति । | २. पिता पुत्राय कुप्यति । |
| ३. श्रीमन् ! भवन्तं नमः । | ३. श्रीमन् ! भवते नमः । |
| ४. अहं स्वमित्रस्य सार्धं गच्छामि । | ४. अहं स्वमित्रेण सार्धं गच्छामि । |
| ५. वृक्षस्य अधः कः शेते ? | ५. वृक्षं अधः कः शेते ? |
| ६. सेवकः स्वामिनः अनुगच्छति । | ६. सेवकः स्वामिनं अनुगच्छति । |
| ७. ग्रामस्य अभितः वृक्षाः सन्ति । | ७. ग्रामं अभितः वृक्षाः सन्ति । |
| ८. तस्य आगते अहं गच्छामि । | ८. तस्मिन् आगते अहं गच्छामि । |
| ९. सा अश्वी गच्छति । | ९. सा अश्वा गच्छति । |
| १०. अहं नगरीं दृश्यामि । | १०. अहं नगरीं पश्यामि, अहं नगरीं द्रक्ष्यामि । |
| ११. राजा प्रजा पाल्यते । | ११. राज्ञा प्रजाः पाल्यन्ते । |
| १२. वयं पुस्तकं अपठाम स्म । | १२. वयं पुस्तकं अपठाम । |

| अशुद्ध | शुद्ध |
|---|---|
| १३. ग्रामात् आगत्वा स अरोदत् । | १३. ग्रामात् आगत्य स अरोदत् । |
| १४. स पुष्पं दृष्टः । | १४. तेन पुष्पं दृष्टम् । |
| १५. सा चित्रं दृष्टवान् । | १५. सा चित्रं दृष्टवती । |

## अभ्यास ४

| अशुद्ध | शुद्ध |
|---|---|
| १. हस्तिः गच्छति । | १. हस्ती गच्छति । |
| २. त्वं मिथ्यां जल्पसे । | २. त्वं मिथ्या जल्पसे । |
| ३. राजा राज्ये अधितिष्ठति । | ३. राजा राज्यम् अधितिष्ठति । |
| ४. सो देवो प्रयाति । | ४. सः देवः प्रयाति । |
| ५. अम्यजाः गच्छन्ति । | ५. अमी अजाः गच्छन्ति । |
| ६. मम मने दुःखं अस्ति । | ६. मम मनसि दुखम् अस्ति । |
| ७. शिवः राजसखा अस्ति । | ७. शिवः राजसखः अस्ति । |
| ८. कान्तारपथा पुरीं प्रयाहि । | ८. कान्तारपथेन पुरीं प्रयाहि । |
| ९. दशरथमहाराज्ञः पुत्रः । | ९. दशरथमहाराजस्य पुत्रः । |
| १०. गौ प्राणं त्यजति । | १०. गौः प्राणान् त्यजति । |
| ११. ते तव दाराः भवन्ति । | ११. सा तव दाराः भवति । |
| १२. स वा त्वं अत्र तिष्ठतु । | १२. स वा त्वं वा अत्र तिष्ठ । |
| १३. याचकं ओदनं देहि । | १३. याचकाय ओदनं देहि । |
| १४. सा पृष्ठात् कुब्जा अस्ति । | १४. सा पृष्ठेन कुब्जा अस्ति । |
| १५. भूपत्युः कथनम् । | १५. भूपतेः कथनम् । |

## अभ्यास ५

| अशुद्ध | शुद्ध |
|---|---|
| १. सः साधुः दोषास्पदः । | १. सः साधुः दोषास्पदम् । |
| २. देवस्य अन्तरेण नास्ति कोपि अत्र । | २. देवम् अन्तरेण नास्ति कोपि अत्र । |
| ३. सः महति विपदि वर्तते । | ३. सः महत्यां विपदि वर्तते । |

| अशुद्ध | शुद्ध |
|---|---|
| ४. नगरस्य परितः उपवनं विद्यते । | ४. नगरं परितः उपवनं विद्यते । |
| ५. अहं फलं गृहीतुं इच्छामि । | ५. अहं फलं ग्रहीतुम् इच्छामि । |
| ६. याचकः मत् धनं याचते । | ६. याचकः मां धनं याचते । |
| ७. अहं तं वक्तुं अशृणवम् । | ७. अहं तं ब्रुवन्तम् अशृणवम् । |
| ८. सत्यमेव जयते । | ८. सत्यमेव जयति, सत्यमेव विजयते । |
| ९. स बालिका रोदति । | ९. सा बालिका रोदिति । |
| १०. विद्यायाः रहितः पुरुषः । | १०. विद्यया रहितः पुरुषः । |
| ११. इन्दुमुखां बालां पश्य । | ११. इन्दुमुखीं बालां पश्य । |
| १२. सः गोः पयो दोग्धि । | १२. सः गां पयो दोग्धि । |
| १३. मम भगिनी रुदन्तीं गच्छति । | १३. मम भगिनी रुदती गच्छति । |
| १४. शिष्यः गुरुं सेवति । | १४. शिष्यः गुरुं सेवते । |
| १५. नृत्यतीं तां पारितोषिकं देहि । | १५. नृत्यन्त्यै तस्यै पारितोषिकं देहि । |

## अभ्यास ६

| अशुद्ध | शुद्ध |
|---|---|
| १. सः गुरवे नमस्करोति । | १. सः गुरुं नमस्करोति । |
| २. छात्राणां शतं अत्र निवसन्ति । | २. छात्राणां शतं अत्र निवसति । |
| ३. सा वराकी मम कृपापात्रं जातम् । | ३. सा वराकी मम कृपापात्रं जाता । |
| ४. कः सहृदयः मधुरगानं न शुश्रूषति । | ४. कः सहृदयः मधुरगानं न शुश्रूषते । |
| ५. एषः नित्यं भोजनसमये उपतिष्ठति । | ५. एषः नित्यं भोजनसमये उपतिष्ठते । |
| ६. मेघाः वर्षन्तु इति—सम्प्रवदन्ति कृषकाः । | ६. मेघाः वर्षन्तु इति सम्प्रवदन्ते कृषकाः । |
| ७. देवैः सुधां सागरं ममन्थे । | ७. देवैः सुधायै ममन्थे सागरः । |
| ८. इयं नगरी त्रयः क्रोशाः आयता । | ८. इयं नगरी त्रीन् क्रोशान् आयता । |
| ९. धिक् ते दुराचारिणे । | ९. धिक् त्वां दुराचारिणम् । |

| अशुद्ध | शुद्ध |
|---|---|
| १०. खलानां संसर्गात् को न विरमते । | १०. खलानां संसर्गात् को न विरमति । |
| ११. मे मनः अस्मै बालकाय स्निह्यति । | ११. मे मनः अस्मिन् बालके स्निह्यति । |
| १२. गुरुं प्रार्थयित्वा गृहं गच्छ । | १२. गुरुं प्रार्थ्य गृहं गच्छ । |
| १३. ग्रामस्य परितः उपवनाः सन्ति । | १३. ग्रामं परितः उपवनाः सन्ति । |
| १४. मां फलं रोचते । | १४. मह्यं फलं रोचते । |
| १५. सीता गीतौ गायतः । | १५. सीता गीते गायतः । |

## अभ्यास ७

**स्वयं करो—**

**( कर्ता और क्रिया-सम्बन्धी )**

१. अहं पूजयसि ।
२. वयं विशामि ।
३. त्वं रक्षति ।
४. यूयं पतामः ।
५. भवान् गच्छसि ।
६. ते नयथः ।
७. ते इच्छावः ।
८. यूयं द्रवामः ।
९. वयं सिञ्चावः ।
१०. भवती मधुरं गायसि ।
११. तौ गच्छथः ।
१२. सः नश्यसि ।
१३. युवां कथं हससि ?
१४. युवां पुस्तकं पातः ।
१५. आवां गृहं गच्छामः ।
१६. सा कूर्दनं कुर्वन्ति ।
१७. त्वं मूर्खः अस्ति ।
१८. बालकाः क्रीडामः ।
१९. कुक्कुरः बुक्कन्ति ।
२०. तस्य चत्वारः पुत्राः आसीत् ।
२१. रामः प्रजापालकः आसीत् ।
२२. त्वं कुत्र आसीत् ?
२३. गर्दभौ गृहे सन्ति ।
२४. सीता नृत्यति गायन्ति च ।
२५. पूज्य-पितरौ गच्छन्ति ।
२६. कृष्णः गोपालकः आसन् ।
२७. पुष्पावलिः विकसन्ति ।
२८. पक्षियुग्मः क्रीडतः ।
२९. आवां दुग्धं पिबामः ।
३०. पथिकसमूहः विश्राम्यन्ति ।

## अभ्यास ९

**स्वयं करो—**

### ( कारक-सम्बन्धी )

१. सः पर्वतः आरोहति ।
२. हरिं अरीन् ताडयति ।
३. रामः कवी नमति ।
४. लोको वह्नि विशति ।
५. रामः पर्णं गणयति ।
६. मुनयः वनं निवसन्ति ।
७. चौरः धनेन चोरयति ।
८. पुत्रः पितुः सह आगच्छति ।
९. रामः नेत्रस्य काणः अस्ति ।
१०. कस्यापि सार्धं कलहं मा कुरु ।
११. जनकस्य नमः ।
१२. शिष्याणां स्वस्ति ।
१३. पुष्पेषु वनं गच्छति ।
१४. सः नगरे गच्छति ।
१५. इदं मम रोचते ।
१६. सः तव शतं धारयति ।
१७. सा त्वां क्रुध्यति ।
१८. सः पर्वतस्य पतितः ।
१९. पुत्रः गुरवे नमति ।
२०. वधू पर्यंके अधिशेते ।

## अभ्यास ८

### ( कारक-सम्बन्धी )

१. रामः कस्यापि साकं कलिं न करोति ।
२. तरुणी पुष्पाणां स्पृहयति ।
३. पापेन दुःखं उत्पद्यते ।
४. मानवैः ब्राह्मणः श्रेष्ठः ।
५. राजा विप्रं धनं गच्छति ।
६. यत्नस्य विना किमपि न भवति ।
७. पुत्रः स्वजनकस्य सह आपणं गच्छति ।
८. हे नृपः ! मां रक्ष ।
९. श्री गुरोः नमः ।
१०. गुरुं निन्दया शिष्यः क्रुद्धो भवति ।
११. नदी नगरात् त्रिभिः क्रोशैः विद्यते ।
१२. शास्त्रेषु तत्वं प्रज्ञो बोधति ।
१३. गिरेः शिखरेण गजः पतितः ।
१४. तडागात् कमलानि उद्भवन्ति ।
१५. ग्रीष्मस्य सूर्ये प्रकाशः चण्डो भवति ।
१६. कपयः वृक्षाय फलानि क्षिपन्ति ।
१७. चन्द्रस्य प्रकाशः जनेभ्यः आह्लादको भवति ।
१८. साधोः वचनात् अतिक्राम्यन्ति मूर्खाः ।
१९. गुरुः छात्राय स्निह्यति ।
२०. मां मिष्टान्नं अतिरोचते ।

## अभ्यास १०

**स्वयं करो—**

**( विविध )**

१. सः पठन्ति ।
२. तौ लिखति ।
३. ते आगच्छति ।
४. भवान् पठन्ति ।
५. भवती हसतः ।
६. ईश्वरः भवन्ति ।
७. नराः पठति ।
८. नरौ आगच्छन्ति ।
९. विद्यालयः गच्छति ।
१०. नृप गच्छति ।
११. स्त्री गच्छन्ति ।
१२. बालक हसतः ।
१३. नरा हसति ।
१४. त्वं पठति ।
१५. युवां गच्छतः ।
१६. यूयं लिखन्ति ।
१७. यूयं वदसि ।
१८. युवां पतथ ।
१९. त्वं भोजनः पचति ।
२०. भवान् सत्यः वदति ।
२१. भवान् रक्षसि ।
२२. यूयं राज्यः रक्षथः ।
२३. त्वं राज्यस्य रक्षसि ।
२४. अहं दृश्यामि ।
२५. आवां स्थावः ।
२६. वयं पामः ।
२७. अहं सदामि ।
२८. पाठशालायां गच्छामि ।
२९. वयं पुष्पं घ्रामः ।
३०. वयं जलं पास्मि ।
३१. ईश्वरः सन्ति ।
३२. वयं अस्मि ।
३३. अहं स्मः ।
३४. त्वं स्थ ।
३५. यूयं अस्ति ।
३६. त्वं करोति ।
३७. स कुर्वन्ति ।
३८. अहं कुर्मः ।
३९. वयं करोमि ।
४०. रामः च कृष्णः पठति ।
४१. पुष्प च फलम् ।
४२. स करोषि ।
४३. आवां कुरुतः ।
४४. यूयं कुरुथः
४५. तौ गच्छावः ।

# [ ख ] अशुद्धि-संशोधन

## अभ्यास १

| अशुद्ध | शुद्ध |
|---|---|
| १. बालकं विद्यालयः गच्छति । | १. बालकः विद्यालयं गच्छति । |
| २. भवान् तत्र गच्छन्ति । | २. भवान् तत्र गच्छति । |
| ३. मनुष्यौ आगच्छन्ति । | ३. मनुष्यौ आगच्छतः । |
| ४. बालकाः पुस्तकः पठति । | ४. बालकः पुस्तकं ( पुस्तकानि ) पठन्ति । |
| ५. त्वं राज्यस्य रक्षसि । | ५. त्वं राज्यं रक्षसि । |
| ६. युवां आगच्छथ । | ६. युवां आगच्छथः । |
| ७. भवन्तौ वदथः । | ७. भवन्तौ वदतः । |
| ८. पत्रानि पतथ । | ८. पत्राणि पतन्ति । |
| ९. अहं स्थामि । | ९. अहं तिष्ठामि । |
| १०. वयं दृश्यामः । | १०. वयं पश्यामः । |
| ११. वयं घ्रावः । | ११. आवां जिघ्रावः । |
| १२. अहं जलं पामि । | १२. अहं जलं पिबामि । |
| १३. वयं सदामः । | १३. वयं सीदामः । |
| १४. द्वौ बालकाः । | १४. द्वौ बालकौ । |
| १५. चत्वारः नरः । | १५. चत्वारः नराः । |
| १६. अष्ट लताः अस्ति । | १६. अष्टः लताः सन्ति । |
| १७. दश पुस्तकं अस्ति । | १७. दश पुस्तकावि सन्ति । |
| १८. पुष्पं च फलम् । | १८. पुष्पं फलं च । |
| १९. विद्यालये गच्छति । | १९. विद्यालयं गच्छति । |
| २०. छात्रः विद्यालयस्य प्रति गच्छति । | २०. छात्रः विद्यालयं प्रति गच्छति । |

## अभ्यास २

| अशुद्ध | शुद्ध |
|---|---|
| १. ग्रामस्य निकषा नदी वर्तते । | १. ग्रामं निकषा नदी वर्तते । |
| २. धर्मस्य अनुगच्छति । | २. धर्मं अनुगच्छति । |
| ३. पुष्पस्य परितः भृङ्गाः । | ३. पुष्पं परितः भृङ्गाः । |
| ४. त्वं पुष्पानि पश्यतु । | ४. त्वं पुष्पाणि पश्य । |
| ५. नगरस्य उभयतः प्राकारः । | ५. नगरं उभयतः प्राकारः । |
| ६. धर्मस्य विना न मुक्तिः । | ६. धर्मं विना न मुक्तिः । |
| ७. सः आसने अधितिष्ठति । | ७. सः आसनं अधितिष्ठति । |
| ८. त्वं तिष्ठिष्यसि । | ८. त्वं स्थास्यसि । |
| ९. नृपात् वसुधां याचते । | ९. नृपं वसुधां याचते । |
| १०. नगरे अजां नयति । | १०. नगरं अजां नयति । |
| ११. कविना अगायत् । | ११. कविः अगायत् । |
| १२. अग्निना नगरं अदहत् । | १२. अग्निः नगरं अदहत् । |
| १३. भूपत्युः सह अगच्छत् । | १३. भूपतिना सह अगच्छत् । |
| १४. अलं हसितस्य । | १४. अलं हसितेन । |
| १५. नेत्रस्य काणः । | १५. नेत्रेण काणः । |
| १६. नेत्राभ्यां काणः । | १६. नेत्रेण काणः, नेत्राभ्यां अन्धः । |
| १७. सुखात् भारं वहति । | १७. सुखेन भारं वहति । |
| १८. गिरौ गच्छेत् | १८. गिरिं गच्छेत् । |
| १९. दुग्धम् पिबेत् । | १९. दुग्धं पिबेत् । |
| २०. अहम् गृहम् गच्छामि । | २०. अहं गृहं गच्छामि । |

## अभ्यास ३

| अशुद्ध | शुद्ध |
|---|---|
| १. तं बालकं दुग्धं वितर । | १. तस्मै बालकाय दुग्धं वितर । |
| २. एतं मुनिं धनं यच्छ । | २. एतस्मै मुनये धनं यच्छ । |
| ३. जनकं नमः । | ३. जनकाय नमः । |

| अशुद्ध | शुद्ध |
|---|---|
| ४. एतं प्रश्नं तस्मात् शिष्यात् पृच्छ । | ४. एतं प्रश्नं तं शिष्यं पृच्छ । |
| ५. बालकं पुस्तकं रोचते । | ५. बालकाय पुस्तकं रोचते । |
| ६. शिष्ये क्रुध्यति गुरुः । | ६. शिष्याय क्रुध्यति गुरुः । |
| ७. स्वामी सेवकं कथयति । | ७. स्वामी सेवकाय कथयति । |
| ८. साधुः भक्तं उपदिशति । | ८. साधुः भक्ताय उपदिशति । |
| ९. इदं वृक्षात् एते फलानि पतन्ति । | ९. एतस्मात् वृक्षात् एतानि फलानि पतन्ति । |
| १०. तेन गुरुणो अधीते । | १०. तस्माद् गुरोः अधीते । |
| ११. सिंहेन बिभेति पान्थः । | ११. सिंहात् बिभेति पान्थः । |
| १२. एभिः तण्डुलैः गोधूमं प्रतियच्छति । | १२. एभ्यः तण्डुलेभ्यः गोधूमं प्रतियच्छति । |
| १३. धनेन ज्ञानं गुरुतरः । | १३. धनात् ज्ञानं गुरुतरम् । |
| १४. अनेन पापेन निवारय स्वपुत्रम् । | १४. अस्मात् पापात् निवारय स्वपुत्रम् । |
| १५. भक्तः पापं जुगुप्सते । | १५. भक्तः पापात् जुगुप्सते । |

## अभ्यास ४

| अशुद्ध | शुद्ध |
|---|---|
| १. स्वजनकं स्मरसि किम् ? | १. स्वजनकस्य स्मरसि किम् ? |
| २. वृक्षस्य एते पुष्पानि । | २. वृक्षस्य एतानि पुष्पाणि । |
| ३. सः गुरोः निन्दति । | ३. सः गुरुं निन्दति । |
| ४. अस्य वालिकां पठनं मां न रोचते । | ४. अस्याः बालिकायाः पठनं मह्यं न रोचते । |
| ५. भोजनस्य पाकं अमुं रोचते । | ५. भोजनस्य पाकं अस्मै रोचते । |
| ६. त्वं नृपस्य सेवसे । | ६. त्वं नृपं सेवसे । |
| ७. साधु नृपात् अन्नं भिक्षते । | ७. साधुः नृपं अन्नं भिक्षते । |

| अशुद्ध | शुद्ध |
| --- | --- |
| ८. विद्या सत्यात् शोभते । | ८. विद्या सत्येन शोभते । |
| ९. मम भोजनं कृते सति सः आगच्छत् । | ९. मयि भोजने कृते सति सः आगच्छत् । |
| १०. नृपेण मृगेषु शराः अक्षिपत् । | १०. नृपः मृगेषु शरान् अक्षिपत् । |
| ११. भवन्तः विद्यायां प्रमाणाः सन्ति । | ११. भवन्तः विद्यायां प्रमाणं सन्ति । |
| १२. भवान् सर्वेषां विद्यानां पात्राणि असि । | १२. भवान् सर्वासां विद्यानां पात्रं अस्ति । |

## अभ्यास ५

| अशुद्ध | शुद्ध |
| --- | --- |
| १. छात्रद्वयं क्रीडतः । | १. छात्रद्वयं क्रीडति । |
| २. दम्पती पुत्रम् अभाषत । | २. दम्पती पुत्रं अभाषेताम् । |
| ३. या बाला आगच्छत् सः मम भगिनी । | ३. या बाला आगच्छत्, सा मम भगिनी । |
| ४. नद्याः आपम् शिष्यः पिबति । | ४. नद्याः अपः शिष्यः पिबति । |
| ५. सः प्राणं असुं वा अत्यजत् । | ५. सः प्राणान् असून् वा अत्यजत् । |
| ६. दारः अक्षतः लाजः च सुखाय भवन्ति । | ६. दाराः अक्षताः लाजाः च सुखाय भवन्ति । |
| ७. वर्षायां सिकता जलप्लाविता भवति । | ७. वर्षासु सिकताः जलप्लाविताः भवन्ति । |
| ८. कतिः समा अगच्छत् । | ८. कति समाः अगच्छन् । |
| ९. चत्वारः कन्याः चत्वारः फलानि खादन्ति । | ९. चतस्रः कन्याः चत्वारि फलानि खादन्ति । |
| १०. दुर्जनः कन्यायाः अपहरति । | १०. दुर्जनः कन्यां अपहरति । |
| ११. विजेता नगरेऽधिकरोति । | ११. विजेता नगरं अधिकरोति । |
| १२. दशमे कक्षायां शतानि छात्राः सन्ति । | १२. दशम्यां कक्षायां शतं छात्राः सन्ति । |

| अशुद्ध | शुद्ध |
|---|---|
| १३. बालकः फलं अदतु अदेत् वा । | १३. बालकः फलं अत्तु अद्यात् वा । |
| १४. अहं गच्छन् आस्म । | १४. अहं गच्छन् आसम् । |
| १५. तदीयं सखाय धनं वितर । | १५. तदीयाय सख्ये धनं वितर । |

## अभ्यास ६

| अशुद्ध | शुद्ध |
|---|---|
| १. राजा खड्गेन अप्रहरत् । | १. राजा खड्गेन प्राहरत । |
| २. अस्य पर्वतस्य पूर्वं महावापी वर्तते । | २. अस्य पर्वतस्य पूर्वेण महावापी वर्तते । |
| ३. शिशुना स्मितं पित्रोः आनन्द जनकम् भवति । | ३. शिशोः स्मितं पित्रोः आनन्द-जनकं भवति । |
| ४. सीता चोरान् बिभेति । | ४. सीता चौरेभ्यः बिभेति । |
| ५. यूयं वयं वा नदीं गमिष्यथ । | ५. यूयं वयं वा नदीं गमिष्यामः । |
| ६. मम आगमनस्य प्रागेव स गतः । | ६. मम आगमनात् प्रागेव स गतः । |
| ७. ग्रामस्य उत्तरे नदी वर्तते । | ७. ग्रामस्य पूर्वेण नदी वर्तते । |
| ८. सा आत्मानं हतप्राश्वा अमन्यत् । | ८. सा आत्मानं हतप्रायम् अमन्यत । |
| ९. सर्वेभ्यः पुत्रेभ्यः गोपालः श्रेष्ठः । | ९. सर्वेषु पुत्रेषु गोपालः श्रेष्ठः सर्वेषां पुत्राणां गोपालः श्रेष्ठः । |
| १०. देवौ भक्ति रोचते । | १०. देवाय भक्तिः रोचते । |
| ११. तुभ्यं सुखं भूयात् । | ११. तव सुखं भूयात् । |
| १२. हिमालयेन गंगा प्रभवति । | १२. हिमालयाद् गंगा प्रभवति । |
| १३. यमुनायाः उभयतः तरवः सन्ति । | १३. यमुनां उभयतः तरवः सन्ति । |
| १४. हरिः पर्यङ्के अध्यास्ते । | १४. हरिः पर्यङ्कं अध्यास्ते । |
| १५. दीनजनाय प्रति दयां कुरु । | १५. दीनजनं प्रति दयां कुरु । |

## अभ्यास ७

| अशुद्ध | शुद्ध |
|---|---|
| १. तस्य कन्यायाः शाटिका हरितम् अस्ति । | १. तस्याः कन्यायाः शाटिका हरिता अस्ति । |

लक्षितम् । उक्तं च—

काकचेष्टा बकध्यानं श्वाननिद्रा तथैव च ।
अल्पाहारी गृहत्यागी विद्यार्थिनः पञ्चलक्षणम् ॥

## ५. विद्या

ज्ञानार्थकाद् विद् धातोः विद्याशब्दः निष्पन्नः । यस्य कस्यचिदपि पदार्थस्य सम्यग् ज्ञानं विद्येति कथ्यते । विद्ययैव कर्त्तव्याकर्त्तव्ययोः, पापपुण्ययोः, पथ्यापथ्ययोश्च परिज्ञानं क्रियते । विद्याविहीनः नरः कर्त्तव्याकर्त्तव्यस्य अज्ञानात् पशुवत् आचरणं करोति । सः आहार-निद्रा-भय-मैथुनादिकं एव जीवनस्य सर्वस्वं मन्यते । अत एवोच्यते—'विद्याहीनः पशुः ।'

विद्या किमपि अपूर्वं धनमिव विद्यते । अन्यानि धनानि सञ्चयाद् वर्धन्ते, व्ययेन क्षीणतां यान्ति । किन्तु विद्याधनस्य इदं किमपि वैशिष्टयं यदिदं सञ्चयात् नाशमायाति, मुहुर्मुहुर्व्ययादपि वर्धते एव । उक्तं च—

अपूर्वः कोपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥

अत एव 'विद्याधनं सर्वधनप्रधानं' इति यदुक्तं तत्सत्यमेव ।

विद्ययैव मनुष्यः सर्वत्र सर्वदा वा प्रतिष्ठां प्राप्नोति । विद्याबलेन एव जगदीशवसु-वेङ्कटेशरमण-रवीन्द्रनाथठक्कुर-हरगोविन्दखुरानाप्रभृतयः जगत्प्रसिद्धाः संजाताः । प्रायस्तु राजानः अपि विद्वज्जनानां पुरस्तात् नतमस्तकाः भवन्ति । अत एवोक्तम्—

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥

विद्या परमश्रेयस्करी विद्यते । सा विदेशे बन्धुवत् सहायतां करोति । सा माता इव रक्षां करोति, पिता इव हितकर्मणि नियुङ्क्ते, कान्ता इव—मानसिकं खेदमपनीय मनोरंजनं करोति । विद्यया लक्ष्म्याः अपि प्राप्तिर्भवति । विद्या अस्माकं कीर्ति दिक्षु विस्तारयति । अत एव कल्पलता इव विद्या अस्माकं सर्वार्थसाधिका विद्यते ।

पुरुषार्थचतुष्टयस्य प्राप्तिरपि विद्ययैव सम्भवति । विद्यया विनयो जायते, विनयेन योग्यता समायाति, योग्यतया धनं प्राप्यते, धनाद् दानं क्रियते इच्छाः च पूर्यन्ते, दानेन पुण्यो भवति, पुण्येन धर्मः संचीयते, धर्माद् हि मोक्षः प्राप्यते । उक्तं च—

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति धनाद्धर्मः ततः सुखम् ॥

विद्यासम्बन्धीनि कतिपयप्रशंसोक्तिविशेषानि अत्र प्रस्तूयन्ते—

१. न चौरहार्यं न च राजहार्यं
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं
विद्याधनं सर्वधनप्रधानम् ॥

२. विद्या नाम नरस्य रूपमधिकं, प्रच्छन्नगुप्तं धनम् ।
विद्या भोग्यकरी, यशः सुखकरी विद्यागुरूणां गुरुः ॥
विद्या बन्धुजनो विदेशगमने, विद्यापरा देवता ।
विद्या राजसु पूजिता न तु धनं, विद्याविहीनः पशुः ॥

३. जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥

४. नक्षत्रभूषणं चन्द्रः नराणां भूषणं गुणः ।
पृथ्वीभूषणं राजा, विद्या सर्वस्य भूषणम् ॥

५. माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥

६. रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीनाः न शोभन्ते निर्गन्धा इव किंशुकाः ॥

७. मातेव रक्षति पितेव हिते नियुंक्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥

८. वसुमती पतिना नु सरस्वती
बलवता रिपुणामपि न नीयते।
समविभागहरैर्न विभज्यते
विबुधबोधबुधैरपि सेव्यते॥

९. विद्याधनं श्रेष्ठधनं, तन्मूलमितरद्धनम्।
दानेन वर्धते नित्यं, न भाराय च नीयते॥

१०. धनं धनं नैव मतो बुधानां
विद्यैव वित्तं मतमस्ति तेषाम्।
चौरो न यां चोरयितुं समर्थो
भूपोऽपहर्तुं न च यां समर्थः॥

## ६. गंगानदी

गंगानदी हिमालयपर्वतात् निस्सरति हिन्दमहासागरस्यैकभागे च पतति। अनया नद्या उत्तरप्रदेशीयाः बिहारप्रदेशीयाः बंगप्रदेशीयाश्च जनाः अधिकतरं प्रभाविताः सन्ति। अनया आनीतेन बालुकासंचयेन निर्मितो भूभागः अधिकाधिकः अन्नोत्पादकः वर्तते। अस्याः समुत्थितैः कुसरित्प्रणालादिभिः क्षेत्राणि सिच्यन्ते। अस्याः जलराशिसमुत्पन्ना विद्युत् बहुविधोपयोगिनी विद्यते। अस्याः जलराशौ नौकाः अपि सञ्चार्यन्ते।

गंगानदी-विषयकाः अनेकाः कथाः प्रचलिताः सन्ति। श्रूयते यत् सा विष्णोः पदनखभागाद् निस्सृता। तां स्वकमण्डलौ निधाय ब्रह्मा परमां मुदं आप्तवान्, किन्तु पश्चाद् भगीरथेन विहितात् तपश्चरणात् प्रसन्नो भूत्वा सः तां अवनितले प्रवहितुं मुमोच। स्वर्लोकात्पतन्तीं तां कैलासी शिवशङ्करः स्वजटाजूटपाशे धृतवान्। तस्मात् स्थानादपि विनिर्मुक्ता सा भगीरथस्य रथमनुगच्छन्ती, सगरतनयान् उद्धरन्ती, जह्नुमहर्षेः पूजनपात्राणि स्वजलेन वहन्ती, प्रयागनगरे प्रियया भगिन्या यमुनया सङ्गच्छन्ती, शिवपुरीं काशीनगरीं आश्लेषयन्ती पत्तननगरं (=पटना) च स्पृशन्ती वंगभूमिं सम्यग् अभिसिञ्च्य स्वप्रणयिनः सागरस्य उत्सङ्गे आपतति।

गंगानद्यां स्वजलराशिं अवमुच्य विविधाः सरिद्वराः नूनं तज्जलं न्यासीकुर्वन्ति इव। गंगायाः जले एकं अलौकिकं वैशिष्ट्यं विद्यते यदिदं कदापि न

प्रदुष्यते। गंगास्नानात् स्वास्थ्यलाभो भवति अनेके रोगाश्च विनाश्यन्ते। अत एव गङ्गास्नानं पुण्यकरं इति धारणा धार्मिकैः जनैः प्रचारिता।

गंगातीरे बाल्मीकिः रामायणं प्रणियाय, तुलसीदासः रामचरितमानसं विरचितवान् पण्डितराजः जगन्नाथश्च गंगालहरीं लिलेख। अस्याः तीरे उत्तरभारतस्य प्रमुखाः नगराः स्थिताः सन्ति।

यतः सा अस्माकं कृते परमश्रेयस्करी, अतः 'गङ्गामाता' इत्यभिधीयते। सुरसरित्, देवापगा, त्रिपथगा इत्यादीनि नामानि तस्याः प्रभावातिशयं एव प्रकाशयन्ति।

## ७. हिमालयः

हिमालयो नाम पर्वतः भारतदेशस्य उत्तरस्यां दिशि वर्तते। अस्य शिखरभागाः सदैव हिमाच्छादिताः सन्ति। अत एव सः हिमस्य आलयः अर्थात् 'हिमालयः' कथ्यते। सः विश्वस्य समस्तेषु पर्वतेषु उन्नततमः। अत एव सः 'नगाधिराजः' इत्यपि ज्ञायते।

पर्वतोऽयं भगवान् शिवस्य क्रीडास्थली, भगवत्याः पार्वत्याः उत्पत्तिस्थलमपि, विविध-किन्नर-गन्धर्व-साध्य-सुरादीनां वसतिरपि। कालिदासेनापि 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नागाधिराजः—इत्यादीनि लिखित्वा हिमालयस्य बहुशः प्रशंसा कृता।

हिमालस्य शृङ्गानि प्रायः दुर्लङ्घ्यानि। अत एव उत्तरदिशायां भारतस्य प्रहरी इव विद्यतेऽसौ। प्राचीनकालादेवायं शत्रूणामाक्रमणेभ्यः भारतं तत्रस्थान् जनान् च अभिररक्ष। अयं पर्वतः भारतदेशस्य मणिमुकुट इव विद्यते।

हिमालयात् बहुसंख्यकाः नद्यः निस्सरन्ति भारतस्य भूभागं च सिञ्चन्ति। अस्योत्सङ्गदेशे विविधाः विटपवराः, लता-ओषधयः, फल-फूल-मूलादयः प्राप्यन्ते ये तु अत्यन्तोपयोगिनः सन्ति। अत्र निवसन्तः अनेकवन्यपशवः अपि मानवोपयोगिनः वर्तन्ते। उत्तरभागात् प्रवहमानेभ्यः शीतवायुभ्यः अयं भारतं अभिरक्षति। हिन्दमहासागरात् समुत्थितानां जलगर्भितानां मेघानां मार्गावरोधं कृत्वा अयमेव पर्वतवरः प्रचुरवृष्टिकारकोऽपि अस्ति।

अस्य पर्वतस्योत्सङ्गे अनेकानि सुरम्यस्थनानि विद्यन्ते। अत्र प्राकृतिकी शोभा अतितरां विराजते। शिमला-नैनीताल-मसूरी-दार्जिलिंग-प्रभृतीनि नगराणि अस्योपत्यकायां एव अवस्थिताः सन्ति यत्र धनिकाः जनाः ग्रीष्मात् परित्राणाय, स्वास्थ्यलाभाय, मनोरञ्जनाय च गच्छन्ति।

वस्तुतः स्वकीय-रक्षाकर्मणा, अनेकविधपदार्थसम्भरणकारणेन, बहूपकार-करणेन चायं भारतवासिनामस्माकं पिता एवास्ति।

## ८. भारतदेशः

### [ देशभक्तिः, राष्ट्रदेवो भव, देशसेवा, दुर्लभं भारते जन्म, जननीजन्मभूमिश्च स्वर्गादपि गरीयसी ]

यो यत्र जन्म लभते सैव तस्य जन्मभूमिः। जन्मभूमिं प्रति अस्माकं अनुरागः प्रत्यक्ष एव। विदेशेषु कोपि कियन्तमपि मान-सम्मानं लभेत सुख-सुविधां वा प्राप्नुयात्, किन्तु स्वजन्मभूमिं सः स्मरत्येव। यथा सर्वसम्बन्धिषु जनाः स्वमातरमेव सर्वाधिकं मन्यन्ते, तद्वदेव जगति सर्वेषु देशेषु स्वजन्म-भूमिः स्वदेशो वा प्रियतमः।

भारतं अस्माकं देशः। वयं भारतीयाः। अत्रोत्पन्नाः, अस्य धान्य-जल-वायु-मृत्तिका-सम्भृतदेहाः, अस्य वनोपवनेषु केलिनिरताः, अस्य प्राकृतिकीषु शोभासु रममाणाः वयं स्वर्गमपि अनादृत्य केवलं भारतेऽधिवासं वाञ्छामः। देशानुरागकारणादेव यवनाक्रमणकाले चन्द्रगुप्त-पुरुप्रभृतयः, मोहमदीया-क्रमणकाले पृथ्वीराजसदृशाः, मुगलशासनकाले राणाप्रताप-शिवराज-छत्र-सालादयः आंग्लशासनकाले च लक्ष्मीबाई-भगतसिंह-चन्द्रशेखर-सुभाषचन्द्र-महात्मागान्धि-प्रमुखाः जनाः यानि कर्माणि कृतवन्तः तानि सर्वदैव सश्रद्धं सहर्षं च संस्मरणीयानि सन्ति। पाकिस्तान-चीनदेशाभ्यां युद्धकाले देशस्यास्य सत्पुत्राः स्वप्राणोत्सर्गमपि तथैव देशभक्तिभावनया कृतवन्तः।

अस्माकं देशः, वस्तुतस्तु स्वर्गादपि गरीयान्। नगाधिराज्ये हिमालयः अस्य मुकुटो वर्तते। सागरः अस्य पादं प्रक्षाल्यति। विन्ध्यपर्वतशृङ्खला अस्य कटिमेखला। गंगा-यमुनेऽस्य वक्षसि पुष्पस्रगिव विहरन्ति।

प्रकृतिदेव्यपि देशोऽस्मं अनुगृहीतः गंगा-यमुना-सिन्धु-सतलज-ब्रह्मपुत्र-

नर्मदा-कावेरी-गोदावरी-कृष्णा-कावेरीप्रमुखाः सरिद्वराः देशमिमं अलं कुर्वन्ति। हिमालयस्य उपत्यकायां, विन्ध्यगिरिवर्यस्य अरण्यप्रान्तरे, नीलगिरेः उत्सङ्गदेशे च प्रकृतिनटी सपुलकं इव नृत्यति। पञ्चनदप्रदेशे, ब्रह्मावर्तक्षेत्रे, वंगभूमौ वा शस्यश्यामलता विराजते। षड्ऋतवः अस्माकं देशे एव विलसन्ति। वाणी-वेश-खान-पान-व्यवहारादिषु वैविध्यं अस्य अन्यतरा विशेषता विद्यते। ननु श्रूयतां वैदिक ऋषेरद्घोषः—

'माता भूमिः पुत्रोऽहं पृथिव्याः।'

## ९. उद्योगः

### [ उद्यमेन हि सिध्यन्ति कार्याणि, उद्योगिनं सिंहमुपैति लक्ष्मीः, दैवं पुरुषकारश्च ]

संसारे सर्वे एव मानवाः सुखं अभिलषन्ति, भूतिं चेच्छन्ति। किन्तु आलस्यं प्रत्यवायरूपेण अन्तराले तिष्ठति। आलस्यकारणादेव जनाः जीवने सफलतां न लभन्ते, अनिष्टं च प्राप्नुवन्ति। अत एव नास्ति आलस्यसमः शत्रु। तमपहाय सर्वैः उद्योगः कार्यः। उक्तं च—

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति॥

उद्यमशालिनः नियतमेव सिद्धिमधिगच्छन्ति। उद्योगं विना न कोऽपि जगति विद्यां धनं कीर्तिं वा लभते। केवलं मनोरथैः न किमपि सिध्यति—यथा सुखसुप्तस्य सिंहस्य मुखे मृगाः स्वयं तस्य ग्रासीभवितुं न प्रविशति। उक्तं च—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

उद्यमेन सर्वमेव सम्भवति। उद्यमं एवाश्रित्य रामः रावणं निहत्य स्वप्रियां सीतां अधिगतवान्, पाण्डवाः कौरवान् विजित्य स्वकीयं भ्रष्टं राज्यं अधिगतवन्तः, देशभक्ताः भारतीयाः वैदिकंपारतन्त्र्यात् स्वमातृभूमिं स्वतन्त्रीं कृतवन्तः। उक्तं हि—

नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् ।
व्यवसाय-द्वितीयानां नाप्यपारो महोदधिः ॥

प्रायस्तु भाग्यवादिनः कथयन्ति यत् भाग्यमेव सर्वत्र फलति । किन्तु धारणेयं नोचिता । भाग्यं निहत्य सर्वैः स्वशक्त्यनुसारं पौरुषं कर्त्तव्यम् । सफलता विफलता च सर्वदा स्वायत्ता न भवति । गीताकारः कथयति—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥

अन्ये उद्यमशालिनः दैवं भाग्यादिकं नाद्रियन्ते । तेषां मतानुसारं ईश्वरोऽपि तेषामेव सहायतां करोति ये तु स्वयमुद्योगवन्तः सन्ति । उक्तं च—

पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात् पुरुषकारेण विना दैवं न सिद्धयति ॥

अन्यदपि—

न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥

केचित्तु मन्यन्ते यत् स्वयं दैवमपि पुरुषकारमेवानुवर्तते । सर्वदा 'दैवं, दैवं, दैवं' इति कापुरुषा एव वदन्ति । वस्तुतस्तु 'विक्लवो वीर्यहीनो यः स दैवमनुवर्तते' ।

तस्मात् सुस्पष्टमिदं यत् सर्वैरेवात्मशक्त्या सर्वदोद्योगः करणीयः । उक्तं च केनापि कविना—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्धयति कोऽत्रदोषः ॥

## १०. परोपकारः

परेषामुपकारः परोपकारः कथ्यते । यः कोऽपि स्वार्थं परित्यज्य परेषां हिताय यत्किञ्चिद् ददाति यत्किञ्चिद् वा करोति तत्सर्वं परोपकार एवास्ति । शास्त्रपुराणादिषु परोपकारस्य महत्वं बहुधा वर्णितं विद्यते । उक्तं हि—

अष्टादश पुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

स्वोदरपूरणन्तु सर्वं एव कुर्वन्ति । पशुपक्षिणोऽपि तथाकर्त्तुं समर्थाः सन्ति । 'काकोऽपि न किं कुरुते चञ्च्वा स्वोदरपूरणम्'—इत्युक्तिः सुप्रसिद्धा एव । स्वार्थं परित्यज्य यः परोपकारभावनया वर्तते स एव श्लाघ्यः जगति । उक्तं हि—

पशवोऽपि हि जीवन्ति केवलं स्वोदरम्भराः ।
तस्यैव जीवितं श्लाघ्यं यः परार्थे स जीवति ॥

परोपकारी जनः मृत्युपरान्तमपि यशः शरीरेण जीवत्येव । परोपकार भावनावशादेव राजा शिविः कपोतप्राणपरित्राणाय स्वयं स्वमांसमपि छित्वा श्येनाय ददौ । महातपो दधीचिश्च सुरगणरक्षणार्थं वज्रनिर्माणाय स्वानि अस्थीन्यपि प्रददौ । शंखचूडनामानं नागविशेषं त्रातुं जीमूतवाहनो गरुडाय स्वदेहमपि समर्पितवान् ।

परोपकारी नरः परेषामुपकारं कृत्वा यादृङ्मनः तोषमनुभवति न तादृग् लक्षशतैरपि रूप्यकैः प्राप्तुं शक्यते । एवंविधाः परोपकारिणः स्वकीयानि दुःखानि विस्मृत्य परोपकारकरणे प्रवृत्ताः भवन्ति । ते खलु क्षुधार्तेभ्यः भोजनं, पिपासाकुलेभ्यः जलं, वस्त्रहीनेभ्यः वसनं, विद्याविहीनेभ्यश्च शिक्षां प्रयच्छन्ति, तेषां कष्टानि च स्वकीयकष्टानि मत्वा मद्दूरीकरणाय प्रयतन्ते । तादृशान्नेव पुरुषोत्तमानिव लक्ष्मीकृत्य केनचित् कविना लिखितं यत्—

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कंकणेन ।
विभाति कायः करुणापराणां
परोपकारेण न चन्दनेन ॥

न केवलं मनुष्येष्वेव परोपकारप्रवृत्तिः प्रवर्तते, अपितु प्रकृत्तौ पशु-पंक्ष्यादिष्वपि तादृशी भावना परिलक्ष्यते । सूर्यः चन्द्रः पवनश्चान्येषामुपकाराय एतेऽनिशं निरताः सन्ति । अधोलिखिते पद्ये एतदेव प्रदर्शितं—

परोपकाराय फलन्ति वृक्षाः
परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः
परोपकारार्थमिदं शरीरम् ।

अन्यदपि—

स्वयं न खादन्ति फलानि वृक्षाः
पिबन्ति नाम्भः स्वयमेव नद्यः ।
धाराधरे वर्षति नात्महेतोः ।
परोपकाराय सतां विभूतय; ।।

अत एवास्माभिः सर्वैः सर्वदा परोपकारो विधेयः ।

## ११. सत्सङ्गतिः

[ सत्सङ्गतिः कथय किं न करोति पुंसाम्
संसर्गजा दोषगुणा भवन्ति ]

सन्तं सज्जनानां च सङ्गतिः सत्सङ्गतिरुच्यते । मानवजीवने सत्सङ्गत्याः प्रभावः सुप्रवतया परिलक्ष्यते । सद्भिर्जनैः सह निवसन मनुष्यः स्वयं सद्गुणोपेतः प्रकृतिसरलः उसात्तभावभरितश्च भवति । सत्सङ्गत्या मनुष्यः परमोन्नतिं प्राप्नोति, तस्य प्रतिष्ठा, प्रभावः, कीर्तिश्च वर्धते। अतएवोक्तं—

सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ।।

मनुष्यः यादृशानां जनानां सङ्गतौ वसति सः तादृश एव सञ्जायते । सत्सङ्गत्या सः सज्जनः शिष्टः विनीतः व्यवहारकुशलश्च भवति । दुर्जन-सङ्गाच्च मनुष्यः स्वयं दुर्जनः दुर्गुणोपित दुश्चरित्रः दुर्गतिश्च जायते । अतएव—'संसर्गजा दोषगुणा भवन्ति' इत्याभाणकं प्रसिद्धमेव असतां सङ्गं सर्वथा परित्यज्य वयं सर्वदा सतां सङ्गतिं कुर्याम ।

सत्सङ्गतिप्रभावेण क्षुद्रोऽपि जनः समुन्नतिं याति प्रतिष्ठां च लभते । तथा हि—

काचः काञ्चनसंसर्गाद् धत्तेमारक्तीं द्युतिम् ।
तथा सत्सन्निधानेन मूर्खो याति प्रवीणताम् ॥

अपि च—

यथोदयगिरेर्द्रव्यं सन्निकर्षेण दीप्यते ।
तथा सत्सन्निधानेन हीनवर्णोऽपि दीप्यते ॥

सत्सङ्गतिप्रभावाद् दुष्टोऽपि साधुर्भवति, मूर्खोपि प्रवीणतां याति। वाल्मीकेर्नाम को न जानाति यस्तु ऋषीणां संगत्या स्वकीयां लुण्ठनवृत्तिं परित्यज्य कालान्तरे महर्षिपदवीं प्राप्तवान्। काचः कांचनसंसर्गात् मारक्तीं द्युतिं विभर्ति, कीटोऽपि सुमनसङ्गत् सतां नृपतीनां देवानां वा शिरः आरोहति। अत एवोच्यते—

कीटोऽपि सुमनः सङ्गदारोहति सतांशिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥

सत्सङ्गतिः अस्माकं सर्वार्थसाधिका विद्यते। सा तु दुर्गुणान् पापान् च दूरीकरोति, धियः जडतां कौमत्यंच हरति, चेतः प्रसादयति, अन्तःकरणं विमलीकरोति, वाचि सत्यं सिञ्चति ( = जनाः अस्माकं वचने विश्वासं कुर्वन्ति ), कीर्तिं च दिक्षु वितनोति। अत एव सत्सङ्गतिः किं भद्रं न वितनुते। उक्तं च—

जाड्यं धियो हरति सिञ्चति वाचि सत्यम्
मानोन्नतिं दिशेति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिम्
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥

—इत्यहो सत्सङ्गतेर्महिमा ।

## १२. सदाचारः

### [ आचार महत्वम्, आचारः परमो धर्मः ]

सतां आचारः सदाचारः। यद्वा—सच्चासौ आचारश्चेति सदाचारः। सज्जनाः यथा आचरन्ति अथवा यदाचरणं सन्मन्यते सः सदाचारः। प्रायः मात्रापित्रोः सुश्रूषा, तेषामाज्ञापालनं, देवानां गुरूणाञ्च वन्दनं, सत्यभाषणं,

अहिंसा भूतेषु दया, क्षमा, अस्तेयं, परोपकारः, धर्माचरणादयः सदाचारस्याङ्गानि मन्यन्ते ।

सदाचारी मनुष्यः सर्वत्र सर्वदा समादरं लभते । सदाचारकारणात् तस्य बुद्धिः प्रखरतां याति, आयुः तेजः ओजश्च प्रवृद्धिं यान्ति, इन्द्रियाणामुपरि संयमो जायते, चेतः विमलीभवति, सद्विचाराणां प्रादुर्भावो भवति, कदापि पापकर्मणि प्रवृत्तिर्न भवति, लोकहितार्थं सः सदैव यतते । अतएव 'आचारः परमो धर्मः' इत्यङ्गीक्रियते । सदाचारः धनादेरपि बहुमन्यते । उक्तं च—

वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

सदाचारस्य महिमा विविधधर्मग्रंथेषु वर्णितो विद्यते । महाभारतानुसारम्—

आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥

तद्विपरीतं दुराचारिणां जगति यादृशी दुर्दशा भवति तदधोलिखिते पद्ये सम्यगुपलक्षितं—

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥

आहारनिद्राभयमैथुनादयः भावाः मनुष्ये पशौ वा समानरूपेण प्राप्यन्ते । सदसद्विवेकः तदनुरूपमाचरणमेव मनुष्यं पशोः विशिनष्टि । यस्मिन् कस्मिन् वा जने गुणानामतिशयो भवेत् न वा भवेत् , किन्तु यदि सः सदाचारवान् भवति, तर्हि सः लोके आद्रियते, सुदीर्घजीवनसुखं च भुक्त्वा मृत्यूपरान्तमपि यशश्शरीरेण जीवति । उक्तं हि—

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥

## १३. अहिंसा

हिंसायाः परित्यागः नूनमहिंसेति वक्तव्यः । त्रिविधाऽहिंसाऽभिमता शास्त्रेषु—मानसिकी, वाचिकी, कायिकी च । परेषां हितचिन्तनं तेषां

अनिष्टादिकसञ्चिन्तनाभावश्च मानसिकी अहिंसा, बहुवचनैः परेषामुत्पीडनं विहाय मधुरालापादिकैः तेषां—चेतःप्रसादनं वाचिकी अहिंसा, परेषां ताडनं हिंसनं वा परित्यज्य सर्वभूतेषु दयादक्षिण्यादेः व्यवहारः कायिकी अहिंसा भवति। मनसा वाचा कर्मणा यः अहिंसायाः पालनं करोति स कोऽपि विरलो मनुष्यः परमश्लाघनीयो भवति।

अस्माकं धर्मशास्त्रेषु, अहिंसायाः महत्त्वं प्रतिपादितमस्ति। मनुस्मृतौ धर्मस्य दशाङ्गानि परिकीर्तितानि। तेषां मध्ये अहिंसा प्रथमस्थाने परिगणिता।

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

अहिंसाधर्मपालकाः जनाः प्रायः दयादाक्षिण्यादियुक्ताः भवन्ति। तेषां गुणगणगणनाकारणादन्ये मनुष्याः स्वयमेव नतमस्तकाः जायन्ते। कीट-पतङ्गादिष्वपि दयावन्तः महर्षयः सदा सर्वदैव पूजार्हाः आदरणीयाश्च अभवन्। इदन्तु अस्माकं धर्मस्यैव विलक्षणं वैशिष्ट्यं यज्जनाः सर्पानपि दुग्धं पाययन्ति, क्षीरीवृक्षान् फलदान् वृक्षांश्च छेत्तुं नोत्सहन्ते, शत्रूनपि प्रेम्णा समालिङ्गन्ति। 'अहिंसा परमो धर्मः' इत्यनेकैकरनेकशः शिक्षितम्। भगवान् गौतमो बुद्धः स्वामीमहावीरश्च अहिंसायाः प्रचारं चक्रतुः।

धार्मिकक्षेत्राद् व्यतिरिक्ते राजनीतिकक्षेत्रेऽपि अहिंसायाऽअमितं महत्त्व-मस्ति। महात्मागान्धिमहोदयस्य नेतृत्वेऽस्माकं देशः अहिंसासम्बलेनैव पार-तन्त्र्यपाशान् प्रणोद्य स्वतन्त्रतामधिगतवान् समग्रं विश्वं च विस्मयाविष्टं कृतवानस्ति।

किन्तु दुर्विनीतानाम् आततायिनं वा कृते अहिंसायाः प्रयोगो न कार्यः, इति शास्त्रेष्वेव निगदितं विद्यते। तथाहि—

गुरुं वा बालवृद्धं वा ब्राह्मणं वा विपश्चितम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥

उपर्युक्तमतानुसारं एव श्रीरामचन्द्रेण हताः बालिरावणादयः, पाण्डवैश्च निहताः अपि दुर्विनीताः कौरवाः। राजनीतिकक्षेत्रे तु सबलस्यैव अहिंसा

भूषणं भवति, निर्बलस्य अहिंसा तु कापुरुषता एव मन्यते। तथापि सामान्य-लोकव्यवहारे अहिंसायाः आवश्यकता को न स्वीकर्त्तुमर्हति।

## १४. व्यायामः

अन्नजलादिकस्येव व्यायामस्यापि महती आवश्यकता वर्तते शरीरसंवर्द्धनाय। व्यायामेन शरीरस्थावयवाः पुष्टाः संजायन्ते, रक्तस्य सम्यक् संचारो भवति, स्फूर्तिः प्राप्यते, रोगाः पलायन्ते, जीवनश्चाह्लादमयं भवति। स्वस्थे शरीरे एव स्वस्थं मस्तिष्कं सम्भवेत् इति धारणा सर्वमान्या अस्ति। सुगठितं शरीरं दृष्ट्वा को न प्रभावितो भवति। देहसौभाग्येन अस्माकं व्यक्तित्वमपि परमाकर्षणं सम्पद्यते।

महाराणाप्रतापः, वीरवरः शिवराजः, अप्रतिमो योद्धा छत्रसालः तथा चैवं विधाः अनेके युगपुरुषाः व्यायामस्य परमोपासकाः आसन्। महावीरो हनूमान् सर्वेषामपि व्यायामरसिकानां आदर्शभूतो विद्यते।

व्यायामस्य स्वरूपे वैविध्यं वर्तते। केचिज्जनाः हाकी-फुटबाल-क्रिकेट-टेनिस-आदिकं क्रीडयन्ति, केचिज्जले संतरतं कुर्वन्ति, केचिदश्वारोहणं, केचिद्धावनं केचिच्च परिभ्रमणमेव कुर्वन्ति। अपरे जनाः मल्लयुद्धं, मुद्गर-चालनं, दण्ड-बैठकादिकं च कुर्वन्ति। भवतु नाम, शरीरस्यावयवानां नियमितरूपेण चालनं परमावश्यकमस्ति। उक्तं हि—

व्यायामपुष्टगात्रस्य बुद्धिस्तेजो यशो बलम्।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत्॥

## १५. वसन्तर्तुः

### [ वसन्त + ऋतुः ]

देशेऽस्माकं षड्ऋतवः क्रमाद्भवन्ति। ते हि ग्रीष्म-वर्षा-शरद्-शिशिर-हेमन्त-वसन्ताः सन्ति। तेषां मध्ये वसन्तर्तुः सर्वोत्तमः सर्वसुखकरः सर्वस्यार्तिहरः सर्वेभ्यश्च पथ्यकरो वर्तते। अत एव 'ऋतुराजः' इति स जनैर्ज्ञायते। पुराणादिषु वसन्तो कामदेवस्य मित्ररूपेण प्रख्यापितो विद्यते।

वसन्ततौ शीतस्य अपगमनेन ग्रीष्मस्य सम्यग् घनागमेन च शीतोष्णतयोः समवस्था जायते। सर्वे जनाः पशुपक्षिणश्च प्रमुदिताः भवन्ति। प्रकृतिसुन्दरी

अपि नवतृणाङ्कुररूपेण स्वपुलकावलिं प्रकटयति, नवपल्लवरूपिणं महार्हं पट्टवसनं धारयति, कुसुमानां निकरैः स्वात्मानं विभूषयति, पुष्पपरागरूपेण पटवासेन स्वदेहं वासयति, जलाशयरूपिणि आदर्शफलके स्वबिम्बमालोक्य स्वरूपराशिना स्वयमेव सम्मोहिता सती पिककलकण्ठविरुतच्छलेन किमपि मन्दं मन्दं आसक्तियोगाद् गायति इव। तां सुसज्जितां सानुरागां समन्द-स्मितां विलोक्य कामदेवोऽपि बाहू प्रसार्य इवोपधावति।

वसन्तर्तुः परममनोरमः भवति। वृक्षेषु नवकिसलयानि प्रादुर्भवन्ति, लतास्वपि नवोद्गतानि सान्द्रचिक्कणदलानि विलसन्ति, धरित्री नवशाद्वलवती संजायते, विटपपादपेषु लतावलयेषु पुष्पाणां प्राचुर्यं बलान्मनो हरति। रक्त-पुष्पावृताः किंशुकाः पलाशवृक्षाश्च सुरम्ये महीतले शोभार्थं न्यस्ताः प्रसून-गुच्छकाः इव राजन्ते। पुष्पसुरभिभरितः सुशीतलः सुखदः पवनोऽपि कश्चित् पीतासवप्रमत्तो रसिकजन इव मन्दं मन्दं पदसञ्चारं करोति। इतस्ततः प्रचलन्तः मधुरं गुञ्जन्तः पुष्पात् पुष्पान्तरं अनुपतन्तः द्विरेफाः कामिनीनां मदविलासचटुलानि इतस्ततः सम्प्रेरितानि अक्षीणि इव विराजन्ते। आम्र-तरवः समञ्जरीकाः सञ्जायन्ते तेषां सुरभिश्च दिक्षु पवनप्रसङ्गेन प्रसरति कामिनां चेतांसि उद्वेलयति। क्वापि निलीनं पिककुलं पञ्चमस्वरेण कूजति। खगवृन्दानां पशुयूथानां च यादृशी स्फूर्तिः वसन्तर्तौ दृश्यते न तादृशी कस्मिंश्चिदन्ये ऋतुविशेषे। सकलानि मरालसारसादिजलचरसनानि स्वच्छ-जलमयानि सरोवराण्यपि अतितरां राजन्ते।

वसन्तस्य सम्यग् वर्णनं कर्तुं तु कविवराः एव पारयन्ति। महाकविभट्टि-सदृशोऽपि शुष्कवैयाकरणः वासन्तीं शोभां समुपवर्णितवान्—

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्जयः कलं
न गुञ्जितं तन्न जहार यन्मनः॥

महाकविमाघेनापि यमकालङ्कारखचिता वासन्तीवा वनावलिः उपवर्णिता—

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥

कविवरः कालिदासस्तु वसन्तसमये मदमत्तानां प्राणिनां चेतोविकारं प्रदर्शयन्नाह—

पुंस्कोकिलः चूतरसासवेन
मत्तः प्रियां चुम्बति रागहृष्टः ।
कूजद्द्विरेफोऽप्ययमम्बुजस्थः
प्रियं प्रियायाः प्रकरोति चाटुः ॥

अन्ते कालिदासस्यैव शब्दावल्यां वसन्तसुषमां निरूप्यात्र उपसंहरते—

द्रुमाः सपुष्पाः सलिलं सपद्मं
स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः
सर्वं प्रिये चारुतरं वसन्ते ॥

## १६. वर्षर्तुः

## [ वर्षा-ऋतु ]

भारतस्येदं असाधारणं वैशिष्ट्यं यदत्र कालक्रमेण षड्ऋतवः भवन्ति—शरद्-शिशिर-हेमन्त-वसन्त-ग्रीष्म-वर्षाश्चेति । तेषु वर्षाकालः परममनोरमः । अस्मिन् ऋतौ प्रचण्डनिदाघस्य सन्तापः प्रशाम्यति, मेघाकुलितस्य सूर्यस्य रश्मिसञ्चयोऽपि सह्यो जायते, वायुमण्डलेऽवलम्बि रजःप्रसरं च विरमति । दीर्घनिदाघसंप्लुष्टानि वनोपवनानि पुनरपि पूर्वशोभां धारयन्ति, नवशाद्वला मही भूयोऽपि दृशो हरति, सर्वत्र हरीतिमायाः साम्राज्यमिव पुनरपि संस्थाप्यते ।

समन्ततः नभो नीलनीलैः पयोधरैः सम्पूर्यते । इतस्ततः सौदामिनी देदीप्यते । ततोऽविरलं मेघाः जलं कटन्ति । नदीनदप्रणालाः जलपूरिताः भवन्ति उत्तालं च वहन्ति, पर्वतशृङ्गाणि लतावृक्षादयः सर्वे नववारिस्नाताः सन्तः पुनर्नवतां यान्ति ।

ग्रीष्मानन्तरं प्रावृड्ऋतौ सर्वेऽपि चेतनप्राणिनः निर्वृत्तिसुखमिवानुभवन्ति। शुष्कजलाशयेषु क्वापि निलीनाः दादुरवृन्दाः निर्गच्छन्ति आनन्दातिरेकेण शब्दायन्ते च। घनानां गर्जनमुपश्रुत्य प्रमुदिताः मयूराः नृत्यन्ति केकाध्वनिञ्च कुर्वन्ति। गोचरेषु चरन्तः पशवः वर्षाजलेनाभिसिञ्चिताः उत्पुच्छायमानाः सन्तः इतस्ततः पारिप्लुतं धावन्ति स्वाह्लादं च प्रकटयन्ति। नभसि उड्डीयन्ते मालाकरिण्यः बलाका पंक्तयः। वनेषु झिल्लीझङ्कारोऽपि पौनःपुन्येन श्रूयते। स्त्रियः बालकबालिकाश्च वृक्षाग्रशाखासु दोलां संस्थाप्य दोलनसुखमनुभवन्ति मधुरं च गायन्ति।

ग्रामेषु कृषकजनाः क्षेत्रेषु जलक्लिन्नेषु सत्सु हलेन भूमिं कर्षन्ति, बीजानि वपन्ति, शस्याङ्कुराणि वाऽऽरोपयन्ति। इत्थं सर्वेभ्यो जडचेतनेभ्यः सुखकरी कल्याणकरी मोदमयी च वर्षेयं कस्मै न रोचते। कवयो भूयो-भूयोऽस्याः गुणान् गायन्ति स्वरूपचित्रणं च कुर्वन्ति। महाकविकालिदासेन मेघाच्छन्नस्य नभोमण्डलस्य कीदृङ्मनोहारि वर्णनं कृतम्—

नितान्तनीलोत्पलपत्रकान्तिभिः
क्वचित्प्रभिन्नाञ्जनराशिसन्निभैः।
क्वचित्सगर्भप्रमदास्तनप्रभैः
समाचितं व्योमघनैस्समन्ततः॥

महर्षि वाल्मीकिरपि यथासंख्यालंकारमाश्रित्य जडजङ्गमानां युगपदेव वर्षावर्णनप्रसङ्गे निरूपणं कृतवान्—

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवङ्गमाः॥

ननु सर्वसुखकारी प्रावृट्कालः वृथैव न यापयेत्।

## १७. इन्दिरागांधी

अस्मिन् असारे संसारे बहवः जनाः जन्मधारणं कुर्वन्ति तेषु सः एव अमरः भवति यः स्वगुणेन, स्वत्यागेन, स्वप्रतिभया जगतम् आलोकितं करोति।

इन्दिरागांधी महोदया स्वमहनीयगुणैः अस्माकं अत्यन्तश्रद्धास्पदा आसीत् । सा स्वावनरतप्रयासेन, दृढसंकल्पशक्त्या, अदम्योत्साहबलेन, अद्भुत-प्रतिभया च भारतस्य अभ्युत्थानाय प्रयत्नमकरोत् ।

इन्दिरागांधी महोदयायाः जन्म तीर्थराजे प्रयागनगरे १९१७ तमे खृष्टाब्दे पं० जवाहरलालनेहरूमहाभागस्य पैतृके आनन्दभवने अभवत् । तस्याः प्रारम्भिकी शिक्षा प्रयागे देहली नगरे च अभवत् । प्रारम्भिकी शिक्षोपरान्तं तया पूना, शान्तिनिकेतन, स्विटजरलैण्डस्थानेषु शिक्षा गृहीता । अन्ततः इङ्गलैण्डदेशस्य आक्सफोर्डविश्वविद्यालये शिक्षां गृहित्वा सा १९४१ तमे खृष्टाब्दे भारतं प्रत्यागता । प्रयागनगरे १९४२ तमे खृष्टाब्दे तस्या, उद्वाहः फीरोजगांधिना सह अभवत् । तस्मिन्नेव वर्षे कांग्रेसान्दोलने तौ कारागारं गतवन्तौ ।

श्रीलालबहादुरशास्त्रिणः मंत्रिमण्डले सा सूचना-प्रसारणविभागस्य मंत्री अभवत् । शास्त्रिमहोदये स्वर्गं गते इन्दिरागांधी महाभागा प्रधानमन्त्री अभवत् । सा बाल्यकालादेव देशसेवायां संलग्ना अभवत् । अल्पावस्थायां द्वादशवर्षायामेव कांग्रेससहायतार्थम् सा 'वानर-सेना' नामकं बालसंगठनम् अकरोत् ।

प्रधानमन्त्रिपदम् अंगीकृत्य सा सर्वतोभावेन देशसेवायां संलग्ना आसीत् । कोशागाराणां राष्ट्रियकरणं, राज्ञां विशेषाधिकाराणां विशिष्ट-धनादीनां च मूलोच्छेदनम्, भूमिगृहसम्पत्यादीनां सीमानिर्धारणं च कार्याणि तस्याः आर्थिकविषये अभिरुचिं, निर्धनजनान् प्रति अत्यधिकं अनुरागं च प्रकटयन्ति ।

१९७१ तमे खृष्टाब्दे भारत-पाकयुद्धे तया राजनीतिकबुद्धिबलेन स्वकौशलेन च विजय अधिगतः । परिणामस्वरूपेण एशिया नामके महाद्वीपे एकं धर्मनिरपेक्षं गणराज्यं 'बंगलादेशम्' राष्ट्रं दृष्टिपथम् आगच्छति ।

इन्द्रिरागांधी महोदया अतीव शान्तिप्रियासीत् । भारतदेशस्य सर्वतो-मुखी प्रगतिं कर्त्तुम् तया आपातकालिका स्थितिः घोषिता । अनेन भारतीय जनता विक्षुब्धा । १९७७ तमे लोकसभानिर्वाचने सा पराजिता । पुनः सा १९८० तमे संसदनिर्वाचने बहुमतेन विजयं प्राप्तवती । सा देशस्य

उत्थानार्थं प्राणपणेन सन्नद्धा आसीत् । दैवदुर्विपाकात् १९८४ तमे खिष्टाब्दे अक्टूबरमासस्य एकत्रिंशे दिवसे प्रधानमन्त्रिनिवासात् अकबररोडस्थितम् कार्यालयं गच्छन्तीं तां बेअन्तसिंहसतवन्तसिंहनामको दुष्टौ सीसकगुलिका-प्रक्षेपणेन प्राहरताम् । इत्थं सा स्वर्गं गता ।

श्रीमती इन्दिरागान्धिनो जीवनं सर्वेषां कृते आदर्शरूपेण अस्ति । चिरकालादुपेक्षितानां निर्धनजनानामुद्धारः, राष्ट्रिय ऐक्यस्थापनम्, जन-तन्त्रस्य, स्वतंत्रतायाः रक्षार्थं प्रयासः, साम्प्रदायिकसोहार्दं विवर्द्धनम्, गुटनिरपेक्षराष्ट्राध्यक्षत्वं, जनतायां स्वावलम्बनबुद्धेः विवर्द्धनमित्यादीनि कार्याणि तस्याः व्यापकं बुद्धि, दूरदृष्टि च प्रकटयन्ति ।

पार्थिवशरीरदृष्टया चिरनिद्रां गतापि सा भारतीयानां हृदयेषु विराजिता ।

यथा सरदारः वल्लभभाई पटेलः राजनीतिक्षेत्रे 'लोहपुरुषः' मन्यते तथैव प्रियदर्शिनी इन्दिरा गाँधी 'लौहमहिला' मन्यते । कवीन्द्ररवीन्द्रस्य 'एकलाचलोरे' वचनं श्रीमती इन्दिरागांधीहृदये मूलमन्त्रमिव कार्यक्षेत्रे वैयक्तिकजीवने च प्रेरकं आसीत् । 'त्याज्यं न धैर्यं विधुरेऽपि काले' तस्याः जीवने प्रत्यक्षम् आसीत् ।

## १८. कश्चन महापुरुषः

## [ महात्मा बुद्धः ]

**जन्म**—यस्मिन् देशे यस्मिन् काले च धर्मस्य ग्लानिर्भवति, तत्र तदैव जगत्संरक्षिणी महती शक्तिः आविर्भूय विलुप्तं धर्मं पुनः संस्थापयति । सैव शक्तिः एकदा भारतवर्षे कपिलवस्तुनगरे शाक्यवंशे राज्ञः शुद्धोदनस्य महिष्या मायादेव्याः कुक्षौ आगत्य यथाकालं वैशाखमासे पूर्णिमातिथौ लुम्बिनीवने शालतरुतले भूमिष्ठो बभूव । 'सिद्धार्थः' इति नामधेयः सः कालान्तरे 'महात्मा गौतमो बुद्धः' इति लोकविख्यातो बभूव ।

**बोधप्राप्तिः**—अथ कदाचित् निरंजनातीरे शुचौ प्रदेशे कस्यचिद् अश्वत्थ-वृक्षस्यमूलभागे पूर्णबोधिलाभार्थं नानाप्रकारैः उपवासादिभिः आत्मनः कार्श्यं सम्पादयन् सहसैव परमां सिद्धिं अवाप । सम्यक् सम्बोधिः तेन अधिगता ।

**आर्यधर्मप्रचारणम्**—सद्धर्मप्रचारणाय सः वाराणसीमेव समागच्छत्। तत्रैव तेन चत्वारि आर्यसत्यानि दिष्टानि। तानि तु—(१) दुःखमस्तीति प्रथममार्यसत्यम्। (२) तस्य हेतुरस्तीति द्वितीयम्। (३) दुःखनिरोधो निर्वाणाख्यः सम्भवतीति तृतीयम्। (४) तद् उपायभूतोऽष्टाङ्गयोगोऽपि चतुर्थम्।

**अष्टाङ्गयोगः**—ज्ञानसम्पत्तये च अष्टाङ्गयोगमार्गं एव शरणम्। तानि योगाङ्गानि तावत्—(१) सम्यग् दृष्टिः, (२) सम्यक् सङ्कल्पः, (३) सम्यग् वाक्, (४) सम्यग् आचारः, (५) सम्यग् आजीवः, (६) सम्यग् वीर्यम्, (७) सम्यग् स्मृतिः, (८) सम्यग् समाधिश्च।

**धर्मप्रचारः**—गौतमो बुद्धस्तु तस्मिन् काले बद्धमूले ब्राह्मणधर्मे अनेकान् दोषान् उपलक्ष्य स्वयमपि एकं निर्दोषं धर्मविशेषं प्रवर्तितवान् तस्य प्रचारं प्रसारं च यावज्जीवनं कृतवान्। बहवोऽपि राजानः प्राज्ञजनाश्च तस्य शिष्यतां अङ्गीकृतवन्तः बौद्धधर्मस्य प्रचाराय स्वजीवनं च अर्पितवन्तः।

**निधनम्**—इत्थं चत्वारिंशदधिकवर्षकालं धर्ममुपदिशन् जीवमुद्धरन् सः कृतकृत्यः पश्चिमे वयसि कुशीनगराख्ये स्थाने देवरियाजनपदान्तर्गते देहं मुमोच। तेन प्रचारितो धर्मः देशे विदेशेष्वपि समादृतोऽभवत्।

## १९. कश्चन संस्कृतकविः

### [ कालिदासः ]

कालिदासः न केवलं भारतदेशस्यापितु विश्वस्याखिलस्य कवीनां मध्ये प्रथमश्रेणीभाक्। संस्कृतसाहित्यकाशे तु कविनक्षत्राणां मध्ये तस्य प्रकाशोऽनुत्तमः सर्वप्रकाशातिशायी वा विद्यते। उक्तं केनापि कविना—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिकासार्थवती बभूव॥

महाकविजयदेवेन—'भासो हासः कविकुलगुरुः कालिदासो विलासः—इत्येतद् कथयित्वा तस्मै कविकुलगुरोः, वाग्देव्यः सरस्वत्याः विलासस्य च पदवी एव प्रदत्ता। अन्यैरपि बाणभट्टः, गोवर्धनाचार्य प्रभृतिभिः प्राज्ञजनैः सः प्रशंसितो वर्तते।

अथ प्रश्नमिदं परिस्फुटितो भवति यत् को विशेषो नाम कालिदासे आसीत् येन सः देशे विदेशेऽपि चेत्थं सम्पूज्यते। तस्य सूक्तयः नगरे-नगरे जने-जनेप्रललिताः सन्तिः, तस्य लोकप्रियतायाः आख्यानं च कुर्वन्ति। एतन्निर्धारणात्पूर्वं तस्य कृतित्वमालोचनीयं विद्यते। सप्तग्रन्थरत्नानि तस्य लेखिनीप्रसूतानि मन्यन्ते। तत्र मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलञ्चेति ग्रन्थत्रयं नाटककोटयाम्, कुमारसम्भवः रघुवंशञ्चेति ग्रन्थद्वयं महाकाव्यश्रेण्यां, ऋतुसंहारम् मेघदूतञ्चेति ग्रन्थद्वयं खण्डकाव्यमिति काव्यसरणौ आकलिताः सन्ति। अन्यान्यपि कतिपयग्रन्थजातानि कालिदासप्रणीतानि श्रूयन्ते। किन्तु नैतत् प्रामाणिकम्।

कालिदासः ईसवीयाब्दपूर्वं प्रथमशताब्द्यामभूत् इत्यधिकतराः विद्वान्सः मन्यन्ते। तस्य जन्मस्थली प्रियभूता वासस्थली वा अवन्तिकेति नाम्नी नगरी—इत्येतस्मिन्न संशयः।

कालिदासस्य पूर्वंमौर्ख्यं राजतनया विद्योत्तमया सार्धं तस्य विवाहः, कालीदेव्याः प्रसादेन कवित्वशक्तेर्प्राप्तिः इत्यादयः अनेकाः जनश्रुतयः लोके प्रचलिताः सन्ति।

कालिदासस्य काव्यशैली वैदर्भी रीतिसंजुष्टा, प्रसादगुणयुक्ता, प्राञ्जलपरिष्कृतसुमधुर-भाषान्विता, यथास्थानं समुचित-अलंकारालंकृता, उत्तमोत्तमभावभरिता, प्रायस्तु शृङ्गाररससम्पृक्ता, छन्दोचित्यगर्भिता, किं बहुना सर्वथा जगन्मनोहारिणी वर्तते। न तत्समः कोऽप्यपरः कविः सरसरचनोद्भावने। पश्चाद्वर्तिनः अनेके कवयः तस्य शैलीं भावसरणिं वाऽनुकृतवन्तः। इत्थं तस्य कविकुलगुरुत्वं सर्वथा सुसङ्गतमेव।

उपमायाः क्षेत्रे सोऽनुत्तमः। राज्ञः दिलीपस्य तद्धर्मपत्न्याश्चान्तरे नन्दिनी नाम्नी धेनुः दिनक्षणामध्यगता सन्ध्या इव रराज—

पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुः
दिनक्षपामध्यगतेव सन्ध्या॥

'अमोघराघव'-कारस्य दिवाकरस्य मतौ—

'भाति श्रीमति कालिदास-कविता कान्तेव कान्ते रता।'

## २०. संस्कृतभाषायाः महत्त्वम्

**सर्वभाषाजननी**—अस्ति खलु संस्कृतभाषा हिन्दयूरोपीयभाषाणां जननी ज्येष्ठा भगिनी वा। काचिद् भाषा संस्कृतभाषोत्पन्ना, काचित्तु बहुलसंस्कृत-शब्दगर्भा चास्ति। उदाहरणरूपेण संस्कृतशब्दः 'पितृ' हिन्दीभाषायाम् पिता, पंजाबीभाषायाम् 'पिउ', फारसीभाषायाम् 'पिदर', ग्रीकभाषायाम् 'पैटर', फ्रेञ्चभाषायाम् 'पेरे', स्पैनिशभाषायाम् 'पेट्रो', आंग्लभाषायाम् 'फादर', जर्मनभाषायाम् च 'फाटेर' भवति।

**प्राचीनतमं साहित्यम्**—संस्कृतवाङ्मयं विश्वेऽस्मिन् प्राचीनतमं विशालतमञ्चास्ति। संस्कृतं हि पराऽपराभेदेन द्विविधं वर्तते। तत्र परा आत्मानं परमात्मानं च बोधयति। अपरा च वार्तां दण्डनीतिं विज्ञानादिकं प्रकाशयति। सोऽयं महद्ज्ञानराशिः राशीभूतोऽस्ति अस्यामेव देववाचि। एतत् वैशिष्टयमन्यासु भाषासु न दृश्यते।

**विशालशब्दकोशः**—सुविशालशब्दकोशो विद्यतेऽत्र। यथा हि—पञ्चविंशतिः पृथिव्यः, सप्तविंशतिः निशायाः, एकविंशतिः उषायाः, पञ्चाशच्च संग्रामस्य नामानि (=पर्यायाः)—संस्कृतभाषायां प्रचलितानि सन्ति। वर्णिकामात्रं दीयतेऽत्र—आमलिकी आमलकः तिष्यफला अमृता वयःस्था कायसंस्था धात्रीफलं इत्यादयः शब्दाः समानार्थकाः सन्ति।

**मानवजातेरितिहासः**—संस्कृतशब्दानां सूक्ष्मपर्यालोचनेन मानवजातेः क्रमिकविकासोपलभ्यतेऽत्र। विचार्यतां तावत्वचनानुबन्धः जन-लोक-मनुष्य-पुरुष-नरप्रभृतीनां शब्दविशेषाणाम्। यथाहि—जननात् **'जनः'** इति मानव-विकारस्य प्राथमिकी स्थितिः सूचिता भवति। यः लोकते पश्यति विचारं वा करोति स **'लोकः'** द्वितीया स्थितिः। मननात् **'मनुष्यः'** इति तस्य पथ्यापथ्यनिर्णशक्तेः सूचनां ददाति। यः पुरि नगर्यां वसति सः **'पुरुषः'** इति तस्य तस्मादप्यधिकसमुन्नतिसूचकः। यः नरति नयति सञ्चालयति वा जनान्, यस्तेषां नेतृत्वं करोति, अन्यान् अनुगमयति, तान्सन्मार्गेण नयति, आदर्शावस्थां प्रापयति सो **'नरः'** इति तस्य पर्याप्तसमुन्नतिप्रकाशकः शब्दः।

**माधुर्यगुणः**—संस्कृतभाषायां किमपि लोकोत्तरः चमत्कारकारी शब्द-सन्निवेशः प्राप्यते यः श्रोतृणां कर्णकुहरेषु मधुधारां वसति। संस्कृतशब्देषु

काप्यपूर्वा रहस्यमयीव शक्तिः सन्निहितास्ति, या तु अर्थावबोधं विनापि श्रुतमात्रं ब्रह्मानन्दसहोदरमानन्दं उपजनयति। यथा हि—

लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्।
रजोवृन्दं विन्दन् किरति मकरन्दं दिशिदिशि ॥

**बह्वर्थप्रकाशनक्षमता**—श्लेषानुप्राणिता यादृशीप्रकाशनक्षमता संस्कृत-भाषायां दृश्यते न तादृशी कुत्राप्यन्यत्र प्राप्तुं शक्यते। 'राघवपाण्डवीयम्।' इत्येकस्मिन् महाकाव्ये एकेनैव वचोविन्यासेन युगपद् राघवपाण्डवचरितयो-रेकत्र समावेशः कृतो विद्यते।

अत एवेयं भाषा देशे विदेशेषु चात्यधिकं समाद्रियते। संस्कृतप्रेमीजनाः एनां देववाणी, सुरभारती, देवभाषा—इति सादरं व्याहरन्ति।

## २१. संस्कृतस्यावनतेः कारणानि

### अभ्युदयोपायाश्च

संस्कृतं कदाचिल्लोकभाषाऽऽसीत् इति प्राचीनप्रबन्धेषु पठ्यते। शिबिका-वाहकाः अपि 'बाधति' इत्यशुद्धं, 'बाधते' इति चेति शुद्धं रूपमजानन्। न केवलं भारते, कम्बोजादिषु देशेष्वपि व्यवहृतेयमासीत्। किन्तु देशस्यास्य दौर्भाग्येण साऽद्य परमां दुर्दशामापन्ना। खेदविषयोऽयं यत्साऽद्य कैश्चिज्जनैः मृतभाषेति निन्द्यते।

**अवनतेः कारणानि**—कानिचित्कारणानि त्वेतादृशानि सन्ति येषां विषये वयं चिरकालादेव निरुपायाः स्मः। यथा हि—

१. **विदेशीय-राजशासनम्**—येन हि संस्कृतभाषा संरक्षणाभावात् क्षीणतामधिगता।

२. **विदेशीयसभ्यताप्रचारः**—यस्माद्वयमपि स्वयं संस्कृतमुपेक्षितवन्तः आंग्लभाषायाः विधेयत्वं स्वीकृतवन्तः।

३. **विभिन्नधर्माणामभ्युदये धर्माणां धर्मिणां वा संघर्षः**—येन संस्कृतस्य तस्य वाङ्मयस्य च प्रभुता क्षतिंगता।

४. **ग्रन्थानां दाहकाः विश्वविद्यालयानां विध्वंसकाः मोहमदीयाः—** ये तु वैमनस्यकारणादेव विविधानत्याचारान्कृतवन्तः ।

कानिचित्तु कारणान्येतादृशानि सन्ति येषां विषये वयं सर्वथैव स्वाधीनाः स्मः । यथा हि—

क— **लेखनशैल्याः काठिन्यम्—** येन हि अर्थाववोधे कठिनतानुभूयते ।

ख— **अर्थगौरवमन्तरेण शब्दाडम्बरेऽत्यादरः—** येन हि काव्यस्य आत्मन एव क्षतिरभूत् ।

ग— **विचाराणामनुदारता संकीर्णता च—** यया हि नूतनशब्दानां विचाराणां वा क्रोडीकरणे संस्कृतज्ञाः नोत्सहन्ते ।

घ— **व्याकरणस्य काठिन्यम्—** येन हि पदे पदे अशुद्धतायाः शङ्का जायते । अशुद्धिभयादेव जनाः प्रायः संस्कृते वाग्व्यवहारं न कुर्वन्ति ।

**अभ्युदयोपायाः—**

१. **अध्यापनप्रणाली-परिष्कारः—** दक्षानां शिक्षकानां नियुक्तिः, रटनं अवहेल्य मननं कार्यम् ।

२. **पाठ्यक्रम-सन्नियमः—** पाठ्यक्रमो न तु वाराणसी-गत-पाठ्यक्रम-व्यवस्था इव भवितव्यः, नापि पञ्चाम्बुनद इव । वाराणस्यान्तु एकस्यामेव आचार्यपरीक्षायां अनेकप्रश्नपत्राणि भवन्ति । इत्थञ्च अन्यविषयपरिज्ञानं न भवति । पञ्चाम्बुनदप्रदेशे हि अनेकविषयाणां एकपदेवाध्ययनं क्रियते । इत्थमपि दोषमेवं यत् कस्मिंश्चिदपि विषये विद्यार्थिनः पूर्णाधिकारो न भवति । अत एव मध्यमसरणिः सर्वथाऽवलम्बनीया ।

३. **उपयोगिग्रन्थसञ्चारः—** संस्कृतवाङ्मये बालोपयोगिग्रन्थानां सर्वथाऽभावः परिलक्ष्यते, तद्दूरीकरणीयः । मौलिकग्रन्थानामप्यभावो दृष्टिपथमायाति । संस्कृते यावन्तः टीकाग्रन्थाः सन्ति न तावन्तः मौलिकाः । संस्कृतज्ञास्तु प्राचीनग्रन्थानां टीकाटिप्पणादिकं कृत्वा पिष्टपेषणमेव कुर्वन्ति ।

४. **प्राचीनग्रन्थोद्धारः**—लुप्तग्रन्थराशेरुद्धाराय गवेषणा कार्या । शोधकार्यस्यापि महती आवश्यकता विद्यते ।

५. **व्याकरण-परिष्कारः**—संस्कृत-व्याकरणस्य क्लिष्टता दुरूहता दुरवबोधता जटिलता च दूरीकरणीया । आधुनिकीं नूतनप्रणालीं समाश्रित्य संस्कृतसूत्राणि बोधगम्यतां नेतव्यानि ।

६. **संस्कृतशिक्षाऽर्थकरी कार्या**—स्वल्पवृत्तिकानां शिक्षकानां वेतनवृद्धिर्विधेया । अर्थाभावादेव संस्कृतशिक्षकाः शिक्षणकार्यमुपेक्ष्य गृहे-गृहे कथावाचनं पौरोहित्यं च कुर्वन्ति ।

७. **संस्कृतभाषाप्रचारः**—( क ) संस्कृतभाषायाः अध्ययनं पाठचक्रमेषु अनिवार्यं कार्यम् । ( ख ) आकाशवाण्याः माध्यमेन समाचाराणाम्, निबन्धानाम् , संस्कृतकविगुणानुवादानाम् , विविधश्लोकानाम् ; प्रहेलिकानाम् , संलापानाञ्च संस्कृते प्रसारणं अतितरां कार्यम् , ( ग ) सरलसंस्कृतभाषायामेव कतिपयसमाचारपत्राणां प्रकाशनमपि कार्यम् । ( घ ) संस्कृते वादविवादानां लेखानां वा प्रतियोगिताः कार्याः । ( ङ ) विभिन्नस्थानेषु संस्कृतपरिषदां स्थापना विधेया ।

इत्थन्तु लुप्तगौरवा ह्रासमुपगता विगलितप्रभावा मरणासन्नापि अस्माकं देववाणी पुनःस्फूर्तिं पुनर्जीवनं च प्राप्स्यति, पुनरप्यतीतगौरवञ्चाधिगमिष्यति ।

अब ग्रन्थ-विस्तार-भय से यहाँ कुछ आवश्यक अन्य निबन्धों की रूपरेखा, उनमें उल्लेख्य मुख्य-मुख्य बातें, अपेक्षित उद्धरण मात्र देकर हम सन्तोष करेंगे ।

## २२. भवितव्यता

### [ बलीयसी केवलमीश्वरेच्छा ]

१. अवश्यं भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥

२. अरक्षितं तिष्ठति दैवरक्षितम् ।
सुरक्षितं दैवहतं विनश्यति ॥

३. पुरुषः पौरुषं तावद् यावद्दैवं तु सम्मुखम् ।
विपरीतगते दैवे न च पुरुषो न पौरुषम् ॥

४. प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्
न पतिष्यतः करसहस्रमपि ॥

४. स्वयं महेशः श्वसुरो नगेशः
सखा धनेशः तनयो गणेशः ।
तथापि भिक्षाटनमेव शम्भो-
र्बलीयसी केवलमीश्वरेच्छा ॥

## २३. सत्यम्

१. स ते हिताय सत्यम् । यद् लोकहिताय भवति तत् सत्यम् ।

२. अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद् हि सत्यमेव विशिष्यते ॥

३. सत्याभावे न कोपि कस्यापि विश्वासं करिष्यति ।

४. दशरथः सत्यस्य पालनाय स्वपुत्रमपि वनं प्रेषयामास स्वप्राणान् च तत्याज ।

५. सत्यवादी हरिश्चन्द्रः सत्यपालनाय विविधान् कष्टान् सेहे ।

६. न हि सत्यात् परोधर्मो, नानृतात् पातकं महत् ।

७. सत्यमेव जयते नानृतम् ।

८. सत्यहीना वृथा पूजा, सत्यहीनो जपो वृथा ।
सत्यहीनं तपो व्यर्थमूषरे वपनं यथा ॥

९. सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥

१०. गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥

११. नहि सत्यात् परोधर्मस्त्रिषु लोकेषु विद्यते ।
पापं मिथ्यासमं नास्ति तस्मात् सत्यं सदा वद ॥

## २४. सन्तोषः

१. सन्तोष = सम् + तुष् + घञ् । अस्य विपर्ययः लोभः लिप्सा वा ।

२. लोभाविष्टो नरो हन्ति मातरं वा सहोदरम् ।

३. 'सन्तोषमूलं हि सुखं, दुःखमूलं विपर्ययः ।'—इति मनुः ।

४. सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥

५. आवश्यकतानाम् आनन्त्यं विद्यते, अतः सन्तोषं विना न कोऽपि कदापि सुखं लभते ।

६. सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥

७. अकृत्वा परसन्तापमगत्वा खलनम्रताम् ।
अनुत्सृज्य सतां वर्त्म यत्स्वल्पमेव तद्बहु ॥

८. 'सन्तोषं विना पराभवपदं प्राप्नोति सर्वो जनः ।'

## २५. सन्मित्रम्

१. पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥

२. कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी ।
अविचार्य प्रियं कुर्यात् तन्मित्रं मित्रमुच्यते ॥

३. मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः ।
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलाः
ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥

४. औरसं कृतसम्बन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥
५. परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥
६. शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥
७. राम-सुग्रीवयोर्मैत्री ( अनन्योपकारिका ),
सुदामाकृष्णयोर्मैत्री ( एकनिष्ठा ) ।

## २६. धनम्

### [ सर्वे गुणाः काञ्चनमाश्रयन्ति ]

१. यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणा काञ्चनमाश्रयन्ति ॥—भर्तृहरिः
२. यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स हि पण्डितः ॥
३. बुभुक्षितैर्व्याकरणं न भुज्यते
पिपासितैः काव्यरसो न पीयते ।
न विद्यया केनचिदुद्धृतं कुलं
हिरण्यमेवार्जय निष्फला गुणाः ॥
४. धनं दानेन शोभते ।
५. हिरण्मयेन पात्रेण सत्यस्य पिहितं मुखम् ।
६. तानिन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ॥
अर्थोष्मणा विरहितः पुरुषः स एव
ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥
७. टका धर्मः टका कर्म टका हि परमं तपः ।
यस्य गेहे टका नास्ति स नरः टकटकायते ॥

# २७. गीता-उपदेशामृतम्

१. युद्धक्षेत्रे कृष्णेनार्जुनं प्रति कर्त्तव्यपालनार्थं प्रदत्त उपदेशो 'श्रीमद्-भगवद्गीता' इति ख्यातोऽस्ति ।

२. न जायते म्रियते वा कदाचित्
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ ( गी० २।२० )

३. नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ( गी० २।२३ )

४. सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
सर्वं धर्मान् परित्यज्य मामेकं शरणं व्रज ॥

५. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ( गी० २।४७ )

६. जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥

७. वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ ( गी० २।२२ )

८. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तेषां तु नामानि च कर्माणि च पृथक् पृथक् ॥

९. नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ( गी० ३।८ )

१०. श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ( गी० ३।३५ )

११. गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता ॥

१२. सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

## २८. एकता

### [ संघे शक्तिः कलौ युगे ]

१. वेदेष्वपि ह्येकतायाः महत्त्वं प्रतिपादितं समुपदिष्टं चास्ति ।
सङ्गच्छध्वं संवदध्वं स वो मनांसि जानताम् ॥ १ ॥
समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये वः
समानेन वो हविषा जुहोमि ॥ २ ॥

२. अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥

३. न वै भिन्ना जातु चरन्ति धर्मम्
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति ॥

४. एकतायाः बलेनैव भारतः पारतन्त्र्यपाशान् छित्वा स्वातन्त्र्यमलभत ।

## २९. उपमा कालिदासस्य

१. 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमाद्वयोः ।' ( साहित्यदर्पण ) । अर्थात् यत्र एकस्मिन् वाक्ये वस्तुद्वयस्य वैधर्म्यं विहाय साम्यमात्रं चेद् उच्यते, तर्हि उपमा भवति ।

२. 'पतिंवरा इन्दुमती दीपशिखा इव व्यराजत ।'—इत्युपमा-प्रयोग-कारणात् 'दीपशिखा-कालिदासः' इति प्रसिद्धिः । तद्धि पद्यम्—
सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ ( रघु० ६।६७ )